ब्रह्मणे नमः

राज्य-शिक्षामन्त्रालयार्थिकसहयोगेन प्रकाशितम्



महर्षि-पिङ्गलाचार्य-प्रणीतम्

# छन्दःशास्त्रम्



मुनिश्रीमेधाव्रताचार्य-कविरत्न-विरचितया
'व्रतिमङ्गला'वृत्त्या समेतम्

प्रणायनस्थानं झज्जर-गुरुकुलम्

...: } २०२४ वैक्रमाब्दे } मूल्यम् २.००
१८८९ शकाब्दे रूप्यकद्वयम्

प्रकाशकः—

भगवान्देव आचार्यः
हरयाणा-साहित्य-संस्थानाध्यक्षः
गुरुकुल झज्जर, रोहतक (हरयाणा)

"With the financial assistance of the
Govt. of India Ministry of Education"

मुद्रकः—

वेदव्रतः शास्त्री विद्याभा[illegible]
आचार्य प्रिंटिंग प्रेस, दयानन्दमठ,
गोहाना रोड, रोहतक।

ब्रह्मणे नमः

भारतराज्य-शिक्षामन्त्रालयार्थिकसहयोगेन प्रकाशितम्

महर्षि-पिङ्गलाचार्य-प्रणीतम्

# छन्दःशास्त्रम्

मुनिश्रीमेधाव्रताचार्य-कविरत्न-विरचितया
'व्रतिमङ्गला' वृत्त्या समेतम्

प्रणयनस्थानं झज्जर-गुरुकुलम्



प्रथमावृत्तिः २००० | २०२४ वैक्रमाब्दे १८८९ शकाब्दे | मूल्यम् २.०० रुप्यकद्वयम्

# प्रकाशकस्य निवेदनम्

चातुर्वर्ण्यं त्रयो लोकाश्चत्वार आश्रमाः पृथक् ।
भूतं भव्यं भविष्यं च सर्वं वेदात् प्रसिध्यति ॥ (मनु० १२।९७)

सेनापत्यं च राज्यं च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ (मनु० १२।१००)

"वेदोऽखिलो धर्ममूलम्" (मनु० २।६), वेदमेव सदाभ्यस्येत्" (मनु० २।१६६) इत्येवमादीनि स्मृतिवचनानि वेदज्ञानस्य माहात्म्यं प्रतिपादयन्ति। पुराकल्पे सर्व एव प्रथमे वयसि गुरुकुलेषु नियमपूर्वकं वेदाध्ययनं चक्रिरे। अत एव वेदानभिज्ञा वेदनिन्दकाश्च सर्वस्माद् द्विजकर्मणो बहिष्कृतास्तिरस्कृताश्च नास्तिकसञ्ज्ञां लेभिरे। भगवत्-पतञ्जल्युद्धृतम्--"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चे"ति वाक्यं शिक्षा-कल्प-व्याकरण-निरुक्त-छन्दो-ज्योतिष-सहितस्य साङ्गोपाङ्गवेदाध्ययनस्यानिवार्यतां प्रतिपादयति। "वेदानामध्ययनमध्यापनं श्रवणं श्रावणं च सर्वार्याणां परमो धर्म" इति वेदोद्धारकस्य समाजसुधारकस्य महर्षेर्दयानन्दस्याप्यादेशः।

शिक्षा—व्याकरणादिवेदाङ्गवच्छन्दःशास्त्रस्यापि वेदज्ञानायानिवार्यत्वं वर्तते। "छन्दः पादौ तु वेदस्ये"ति प्रतिपादयता छन्दोज्ञानं पादस्थानीयमुक्तम्। यथैव लोके पादवन्तरा पुरुषस्य गतिर्नास्ति तथैव वेदे छन्दोज्ञानविरहितस्य पङ्गोर्गत्यभावः सुनिश्चित एव। न केवलं वेदज्ञानायैव छन्दःपरिज्ञानमपरिहार्यमपि तु लौकिककाव्यशास्त्रेषु पाटवं रचनानैपुण्यं चाधिजिगमिषुभ्योऽपि छन्दोबोधः परमावश्यकः।

वैदिक लौकिक-छन्दसां सुपरिज्ञानाय पिङ्गलाचार्यप्रणीतं "छन्दःसूत्रमे"व श्रेष्ठतममिति निर्विवादम्। तेषु च हलायुधभट्ट-विरचिता मृतसञ्जीवन्याख्या वृत्तिरुपलभ्यते। तस्यां सूत्रार्थ-संगमनाय यान्युदाहरणानि लिखितानि तानि शृङ्गारप्रधानानि, अत एव सुकुमारमतीनां कुमाराणां कुमारीणां चाध्ययना-ध्यापनायानुपयुक्तान्याश्रमविरुद्धाश्लीलभावनोत्पादकत्वात्। छन्दो-ज्ञानं तु तेषामपि समुपयोगीति विचार्य छन्दःसूत्रेषु मत्प्रेरणया स्वर्गतेन महाकविमुनिमेधाव्रताचार्येणोक्तदोषवर्जिता "व्रति-मङ्गला"ख्या व्याख्या व्यलेखि। शास्त्रान्ते प्रस्तारसूत्राणां व्याख्यानं तु विद्वद्वरः स्वामिवेदानन्दवेदवागीशोऽकार्षीत्। वृत्तिरियं 'व्रतिमङ्गला' न केवलं व्रतिनामेव मङ्गलकारिणी प्रत्युत सर्वेषामेव छन्दोजिज्ञासूनामिति विश्वसिमि।

मुद्रणालयसञ्चालकेन मम प्रिय-शिष्येण पण्डितवेदव्रतेन शास्त्रस्यास्य सम्पादने मुद्रणे च महान् परिश्रमो व्यधायि, पुनरपि दृष्टिदोषान्मात्राभ्रंशाद्वा यदि क्वचित्स्खलितं चेत्कविभिः संशोध्य पठनीयं पाठनीयं चेति निवेदयति—

*आश्विनकृष्णपञ्चम्याम्*
२०२४ वैक्रमाब्दे

*विदुषां वशंवदो*
*भगवान्देव आचार्यः*

❀ ओ३म् ❀



# प्रास्ताविकम्



**छन्दःशास्त्रस्य मूलम्—**

महनीयमहिमशालिनोऽनन्तगुणरत्नमालिनः सकलमनुज-कल्याणकारिणः समग्रसंसारधारिणः परब्रह्मपरमात्मनो ज्ञानरूप-वेदचतुष्टयाद् गायत्र्यादिच्छन्दसां यज्ञकर्मणि विनियुक्तत्वात्तद-वबोधनायादौ ब्राह्मणग्रन्थेषु तेषां पादसंख्या तत्र प्रविभक्ताक्षरसंख्या च निर्दिश्यते। पादसंख्यामात्रेणाक्षरसंख्यामात्रेण च वैदिकच्छन्दसां गायत्र्यादिव्यवहारः। तत्र किञ्चिन्न्यूनाधिकतायामपि न छन्दोहानिः सम्पद्यते। तदुक्तम्—"न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम् (ऐतरेयब्राह्मणे १।१६)। "न ह्येकेनाक्षरेणान्यच्छन्दो भवति न द्वाभ्याम्" (सां० ब्रा० २७।१) इति। ततो ब्राह्मणग्रन्थेष्वि-तस्ततः पर्यस्तान् विध्यर्थवादादीन् समाहृत्य सारल्येन यज्ञकर्मणि सूत्रयितुं प्रवृत्तेषु भगवदाश्वलायनसांख्यायनापस्तम्बादिषु तदुप-योगिनां छन्दसां लक्षणान्यपि ब्राह्मणारण्यकादिभ्यो निष्कृष्य पृथग् वर्णनीयान्यभवन्। तानि चैवं सूत्रयाञ्चकार तत्र भवान् सांख्यायनः—

त्रिपदा गायत्री, उष्णिक्, पुर उष्णिक्, ककुप्, विराट् च पूर्वा·····इत्यादि (सां० श्रौतसूत्र० ७।२७)। इदमेव मूलं छन्दः-शास्त्रमहातरोरिति मन्यामहे। अत्रैकेन द्वाभ्यां वाक्षराभ्यां न्यूनाधिक्ये निचृद्भुरिगिति संज्ञाविशेष उच्यते। पिङ्गलाचार्येण पुनः—"ऊनाधिकेनैकेन निचृद्भुरिजौ" "द्वाभ्यां विराट्स्वराजौ" (पिं० ३।५९-६०) इत्युक्तमिति शास्त्रस्योत्तरोत्तरं परिणततावसीयते।

निदानसूत्राणामिदमेव स्थानम्। प्रातिशाख्यसर्वानुक्रमण्यौ

वैदिकच्छन्दसां लक्षणानि दर्शयन्त्यावपि पिङ्गलादूर्ध्वमेवाविर्भूते इत्यनुपदमेव दर्शयिष्यते ।

## लौकिकच्छन्दसामुत्पत्तिः—

अथाधीयमानेष्वेवाम्नायेषु केषाञ्चनर्चामर्धर्चां पादानाञ्च श्रुतिमनोहरतामनुसन्दधानाः परमर्षयस्तत्राक्षरपरिच्छेदं लघुगुरुनियमं च निदानमवादीधरन् । तान्येव चाम्रेड्याम्रेड्य स्वयं वृत्तानि विरचयामासुः । क्वचिच्चाक्षरसंख्यानिरपेक्षमेवोच्चारणकालसाम्यमात्रं विशिष्टवृत्तसाधकं समीक्षमाणा मात्रावृत्तानि कल्पयाम्बभूवुः । दृश्यन्ते हि नानाविधवृत्तानां मातृकायमाणा मन्त्रभागा वेदे । यथा—

क) हृदिस्पृगस्तु शन्तमः । (ऋ० १।१।३१) इति प्रमाण्याः ।

ख) पूषणवते ते चकृमा करम्भम् । (ऋ० ३।३।१८)
हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
(यजु. अ०२५-१०) इतीन्द्रवज्रायाः ।

ग) स्तुहि श्रुतं गर्तसदं युवानं (ऋ० २।७।१८) इत्युपेन्द्रवज्रायाः ।

घ) अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुहचिद् दिवेयुः ।
(ऋ० १।२।१४) इत्युपजातेः ।

ङ) इन्द्रासोमा दुष्कृते मा सुगं भूत् (ऋ० ५।७ ६) इति शालिन्याः

च) आ देवानामभवः केतुरग्ने (ऋ० ).। नि वातोर्म्याः

छ) रथं न दुर्गाद् वसवः सुदानवः (ऋ० १।७।२४)
इति वंशस्थस्य ।

ज) यूना ह सन्ता प्रथमं विजज्ञतुः (ऋ० ७।२।१९)
इतीन्द्रवंशायाः ।

झ) अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर (ऋ० १।१ १
इति नाराचकस्य ।

एवमन्येषामपि वृत्तानां मूलभूताः पादाश्चार्धर्चश्च तत्र तत्र शतश उपलभ्यन्ते। अतो वेद एव मूलं लौकिकानामपि च्छन्दसामिति युक्ततरमनुमिमीमहे।

## छन्दःशास्त्रस्य वेदाङ्गता—

तत्रैव द्विविधानामपिच्छन्दसां लक्षणविधायकं शास्त्रमिदमाविरकार्षीत्तत्र भवान् पिङ्गलनागः। सर्वेष्वप्युपलभ्यमानेषु छन्दोग्रन्थेष्विदमेव पुराणतरमार्षञ्च विलसति। अत एवैतद् वेदाङ्गतयोपादीयते वैदिकैः। लौकिकानामपिच्छन्दसां लक्षणसंग्रहपरस्यास्य वैदिकलौकिकशब्दलक्षणविधायकपाणिनिव्याकरणस्येव वेदाङ्गता न विरुध्यते। दृश्यते चोपनिषदादिषु वेदभागेषु क्वचिल्लौकिकान्यपिच्छन्दांसि। तेषां लौकिकसंज्ञा तु "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायेनैवेति न किञ्चिदत्याहितम्।

## प्राचीनाश्छन्दःशास्त्रकाराः—

पिङ्गलाचार्यकृतच्छन्दःशास्त्रात्पूर्वमपि शास्त्रेऽस्मिन् क्रौष्टुकि-यास्क-ताण्डि-सैतव-काश्यप-रातमाण्डव्यप्रभृतीनां शास्त्राण्यासन्निति पिङ्गलकृतात्तन्मतवर्णनाद् विज्ञायते। तत्र क्रौष्टुकिः— बौधायनीये भारद्वाजगोत्रकाण्डे 'भृष्टयो भृष्टुभिन्दयः कौष्टुकयः' इति श्रुतानां क्रौष्टुकीनां कश्चित्स्यात्। अयमतीव प्राचीनो यतो यास्केनापि स्मर्यते—'द्रविणोदा इन्द्र इति क्रौष्टुकिः (निरु० ८।२) इति।

यास्कः—आपस्तम्बेन भृगुषु पठितः 'यास्कबाधूकमौनमौकाः' इति। अयं निरुक्ताख्यनिघण्टुभाष्यप्रणेता 'यास्को मामृषिरव्यग्रो नैकयज्ञेषु गीतवान्' (महा० शान्ति० ३४३।७२) इत्यादिना महाभारतेऽपि स्मर्यमाणः।

ताण्डिः—ऋषिरासीत् कृते तात ! ताण्डिरित्येव विश्रुतः (महा० अनु० १६।१)।

सैतवः—सैतवविषयेऽधिकं किमपि नावगम्यते। केवलं लौकिकच्छन्दोलक्षणविधायकशास्त्रकर्त्तायमासीदित्यनुमीयते।

काश्यपः—काश्यपस्तु मन्दारमरन्दटीकायां कृष्णशर्मकृतायां माधुर्यरञ्जन्यां प्रमाणीक्रियते–'तत्र भगवता सूत्रकारेण काश्यपेन' (पृ०।६) इति।

रातमाण्डव्यौ—रातमाण्डव्यौ तु सम्भूय ग्रन्थकर्त्तारावित्यनुमीयते। तत्र प्रवरदर्पणे भरद्वाजाङ्गिरोमध्ये कश्चिद् रातो दृश्यते। माण्डव्यश्च बौधायनसूत्रे भृगुगणे, आश्वलायनसूत्रे तर्पणप्रकरणेऽन्यत्र च बहुषु ग्रन्थेषु श्रुतः। महाभारते चादिपर्वणि (१०७) कश्चिद् माण्डव्य उपवर्णितः। धर्मशास्त्रमपि रातमाण्डव्यप्रणीतमस्तीति स्मृतिसारसमुच्चयादिपर्यालोचनया प्रतीयते। तत्र रातमाण्डव्य इत्येकत्वेन व्यपदेशो दृश्यते, स च शङ्खलिखितवत् सम्भूय ग्रन्थकर्तृत्वनिमित्तक एव स्यात्।

एतदतिरिक्ता अन्येऽपि छन्दःशास्त्रकाराः पिङ्गलाचार्यात् पूर्वकालिका भवितुमर्हन्ति यन्मतमसौ 'एकीयम्' (पिं० ५।१५) इति निर्दिशति। परं तद्विषयेऽविदितविशेषा जोषमेवावतिष्ठामहे।

## पिङ्गलस्य कालो देशश्च—

अथ कोऽयं पिङ्गलनाग ? इति पर्यनुयोगे महाभारते जैमिनीये सर्पसत्रे दग्धेषु नागेषु कश्चित् पिङ्गलो दृश्यते—'निष्टानको हेमगुहो नहुषः पिङ्गलस्तथा' (महा० आदि ३५।६) इति। नासौ छन्दःशास्त्रप्रणेता भवितुमर्हति, मुनित्वाभावात्, अस्यान्यथैव मरणश्रवणाच्च। किन्तु मात्स्येऽङ्गिरस्सु 'बोधिर्नगः सौगमाक्षिक्षीरयोरि-

किरेव च' (१९६।६) इति श्रुतस्य नगस्य पुत्रः, तत्रैव 'ज्ञात्वायनो हरिर्वाशियः पैङ्गलश्च तथैव च।' (१९६।३२) इति श्रुतस्य पैङ्गलस्य पिता चायं पिङ्गलनागो भविष्यतीत्यस्माकं सम्भावनास्ति।

एतेन महाभाष्यकारं पतञ्जलिमेव पिङ्गलापरनामधेयमाचक्षाणा अपि व्याख्याताः। किञ्च महाभाष्यनवाह्निके पैङ्गलकाण्वः (९।७३) इति शब्ददर्शनात्। भाष्यात्प्राचीनायामृग्वेदसर्वानुक्रमण्यां छन्दःशास्त्रीयसूत्रानुवादस्योपदर्शितत्वाच्च पिङ्गलस्य महाभाष्यकारात् पतञ्जलेः प्राचीनत्वं व्यक्ततरम्।

निवासस्तु पिङ्गलाचार्यस्य प्रायः पश्चिमोदधेस्तीरप्रदेश एवेति निश्चीयते। तथा हि—तद्देशोद्भवस्त्रीषु रूढौ अपरान्तिका (पि० ४।४१) वानवासिका (पि० ४।३३) इति शब्दौ छन्दःशास्त्रे वृत्तनामत्वेनायं प्रायुङ्क्त। अपरान्तिका "पश्चिमसमुद्रसमीपेऽपरान्तदेशस्तत्र भवा" वानवासिका कोङ्कणदेशात् पूर्वेण वनवासभागस्तत्र भवा (२,५,२६,३२) इति वात्स्यायनकामसूत्रव्याख्या जयमङ्गला। प्राच्यवृत्तिरुदीच्यवृत्तिः (पि० ४।३७।३८) इति संज्ञे अप्युक्तार्थेऽनुकूले। महोदधितीरवासित्वादेव—"छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलम्" (२।२९) इति पञ्चतन्त्रे दृश्यमानं तद्विषयकं वर्णनमपि स्वरसतः संगच्छते। अतो दक्षिणकोङ्कणमेवास्य निवासस्थानमिति सम्भावयामः।

## छन्दःशास्त्रे वृत्तसंज्ञाः—

छन्दःशास्त्रे समुपलभ्यमानासु वृत्तसंज्ञासु तु काश्चन विलासिनीललितसुभगान् भावानाविष्कुर्वन्ति। काश्चन मात्रासमकं

समुद्धृत्योदाहृताः श्लोकास्सन्ति तेषां तेषां नामानि विन्यस्य सङ्केतसूचिरपि दीयतेऽधस्तात्क्रमशः ।

१- दयानन्ददिग्विजयमहाकाव्यम् । [द० दि० सर्गः श्लोकः]
२- ब्रह्मर्षिविरजानन्दचरितम् । [ब्र० वि० स० श्लो०]
३- नारायणस्वामिचरितम् । [ना० स्वा० अ० श्लो०]
४- प्रकृतिसौन्दर्यम् । [नाटकम्] [प्र० सौ० अं० श्लो०]
५- ब्रह्मचर्यशतकम् । [ब्र० श० श्लो०]
६- ब्रह्मचर्यमहत्त्वम् । [ब्र० म० श्लो०]
७- ईशोपनिषत्काव्यम् । [ई० उ० मं० श्लो०]
८- दयानन्दलहरी । [द० ल० श्लो०]
९- दिव्यानन्दलहरी । [दि० ल० श्लो०]
१०- गुरुकुलशतकम् । [गु० श० श्लो०]
कविवराखिलानन्दः । [क० अ०]
महाकविहलायुधः । [म० ह०]

संस्कृतसाहित्येऽस्माभिरुपन्यास-नाटक-काव्य-लहरी-प्रमुख-ग्रन्था गुरुलघुरूपेण चतुर्विंशा निरमायिषत । आर्यभाषायां च 'गिरिराजगौरव' 'रुक्मिणीहरण' (नाटक) दिव्यसंगीतामृत' इति काव्यनाटकसंगीतग्रन्था अपि व्यरचिषत । तेषु केचन प्रकाशिता अपि समाप्ताः केचिच्चाप्रकाशिता एव हस्तलिखिता विलसन्ति ।

अल्पज्ञतयास्माकं व्रतिमञ्जलायामस्यां वृत्तौ काचन त्रुटिरपि स्यात् सा चेद् विपश्चिदपश्चिमैर्दयार्द्रहृदयैः सहृदयैर्निश्शङ्कं करणातिथीक्रियेत तदा बलवदुपकृतास्स्याम वयम् । इत्यलं पल्लवितेन विद्वद्वरेषु महाभागेषु ।

विदुषामाश्रवो—
मुनिमेधाव्रताचार्यः कविरत्नम् ।
ता० ४-१२-६० रविवार
सं० २०१७ पोष कृष्णा १
दक्षिणे-मार्ग० कृष्णा १

वृत्तिप्रणयनस्थानम् ।
झज्जर—गुरुकुलम् ।
रोहतकमण्डलान्तर्गतम् ।

* ब्रह्मणे नमः *

# महर्षिपिङ्गलाचार्यप्रणीतं छन्दःशास्त्रम्

मुनिश्रीमेधाव्रताचार्यकविरत्नप्रणीत 'व्रतिमङ्गला' वृत्तिसमेतम्

ओमक्षराम्बरमणेररुणांशुमाला
ब्रह्माण्डमण्डलमलं समलङ्करोति ।
आदित्यचन्द्रवसुधान्तरसर्वभागाञ्-
ज्योतिर्मयान् विदधती सततं चकास्ति ॥१॥

ओमक्षरं सकलमङ्गलदं प्रणम्य
ब्रह्मस्वयम्भुविभुशम्भुमहेश्वरं कम् ।
आचार्यपिङ्गलकृतं निगमाङ्गमाद्यं
छन्दःसुसूत्रमधिकृत्य तनोमि वृत्तिम् ॥२॥

म्यरस्तजभ्नगैर्लान्तै — रेभिर्दशभिरक्षरैः ।
अशेषं वाङ्मयं व्याप्तं ब्रह्माण्डमिव विष्णुना ॥३॥

अश्लीलदोषरहितां 'व्रतिमङ्गलाख्यां'
वृत्तिं पवित्रमधुरामनवद्यपद्याम् ।
मेधाव्रतोन्नतिपरायणवर्णिराजां
सुश्रेयसे खलु विरच्य मुदं बिभर्मि ॥४॥

वेदाम्बुधेस्सुमतिमन्थनदण्डयोगा-
च्छन्दोऽमृतं श्रुतिविदोद्धृतमत्र दत्तम् ।
येनार्यपिङ्गलममुं मनसाऽभिवाद्य-
च्छात्रव्रजोपकृतये प्रणयामि काव्यम् ॥५॥

आर्याखिलानन्दकवीश्वरस्य
हलायुधस्यापि महाकवेश्च ।
क्वचिद् गृहीतान्युचितानि तानि
पद्यानि वृत्तौ व्रतिमङ्गलानि ॥६॥

कृतज्ञेन मया तेषा–मभिनन्द्य कृतिं पराम् ।
काव्यनिर्माणदाक्ष्येऽपि–प्रादर्शि गुणगृह्यता ॥७॥

इह हि ब्रह्मचारिणीनां ब्रह्मचारिणाञ्च साङ्गवेदाध्ययनमाम्नायते । अर्थावगमावधिश्चाध्ययनविधिः । वेदाङ्गत्वं च छन्दसः, यथा— "शिक्षा–कल्प–व्याकरण–निरुक्त-च्छन्दो–ज्योतिषमिति" इति वचनात् । तदध्ययनं निगमोपदिष्टत्वाच्छ्रेयस्करम् । "अथ त्रिष्टुभा यजति, बृहत्या गायति, गायत्र्या स्तौती"त्यादिशास्त्रश्रवणादर्थान्वयायातं त्रिष्टुबादिज्ञानम् । किञ्चापरिज्ञानाच्छन्दसः प्रत्युत प्रत्यवायो निशम्यते यथा—"यो ह वा अविदितार्षेयच्छन्दोदैवतविनियोगेन ब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स स्थाणुं वर्च्छति गर्तं वा पद्यते प्रमीयते वा पापीयान् भवति । यातयामान्यस्य छन्दांसि भवन्ति' (छन्दोगब्राह्मणम् ३।७।५) । तस्माच्छन्दःपरिज्ञानं विधेयम् । तदर्थमिदं शास्त्रमुपक्रम्यते । तत्र लघुनोपायेन शास्त्रावगमसाधनाय संज्ञा निगदति तत्रभवान् सूत्रकारः पिङ्गलाचार्यः—

धी श्री स्त्री म् ॥१॥

धी श्री स्त्री इत्यनेन गुरुत्रयं नामरूपेणोपपादयति मकारञ्चाभिधानत्वेन । ततश्चायमर्थः—सर्वगुरोस्त्रिकस्य मसञ्ज्ञा निगद्यते । धी-आदीनां ग्रहणप्रयोजनं परस्तादभिधास्यामः ।

मप्रदेशाः—"विद्युन्माला मौ गौ" (पि० ६।६)। "मत्ता म्भौ सगौ" (पि० ६।१३) इत्येवमादयः ॥१॥

वरा सा य् ॥२॥

वरा सा इत्यनेनादिलघोस्त्रिकस्य यसंज्ञाभिधीयते। यप्रदेशाः—"भुजङ्गप्रयातं यः" (पि० ६।३७) इत्येवमादयः ॥२॥

का गुहा र् ॥३॥

का गुहा इत्यनेन मध्यलघोस्त्रिकस्य रसंज्ञाभिधीयते। रप्रदेशाः—"स्रग्विणी रः" (पि० ६।३८) इत्येवमादयः ॥३॥

वसुधा स् ॥४॥

वसुधा इत्यनेनान्त्यगुरोस्त्रिकस्य ससंज्ञोदीर्यते। सप्रदेशाः—"तोटकं सः" (पि० ६।३१) इत्येवमादयः ॥४॥

सा ते क्व त् ॥५॥

सा ते क्व इत्यनेनान्त्यलघोस्त्रिकस्य तसंज्ञा परिभाष्यते। तप्रदेशाः—"तनुमध्या त्यौ" (पि० ६।२) इत्येवमादयः ॥५॥

कदा स ज् ॥६॥

कदा स इत्यनेन मध्यगुरोरक्षरत्रयस्य जसंज्ञा समुदीर्यते। जप्रदेशाः—"कुमारललिता जसौ ग्" (पि० ६।३) इत्येवमादयः ॥६॥

किं वद भ् ॥७॥

किं वद इत्यनेनादिगुरोर्वर्णत्रयस्य भसंज्ञा निगद्यते। भप्रदेशाः—"चित्रपदा भौ गौ" (पि० ६।५) इत्येवमादयः ॥७॥

न ह्स न् ॥८॥

न ह् स इत्यनेन निखिललघोर्वर्णत्रयस्य नसंज्ञोपादीयते। नप्रदेशाः—"दण्डको नौ रः" (पि० ७। ३३) इत्येवमादयः ॥८॥

गृ ल् ॥९॥

गृ इत्यनेनोपलक्षितस्य ह्रस्वस्य ल इति संज्ञा विज्ञाप्यते। लशब्दश्च लघुवाचकः। तेन ह्रस्वमक्षरं लघुसंज्ञकमित्यस्मिञ्छास्त्रे व्यवह्रियते। "ह्रस्वं लघु" इति पाणिनिमुनिनापि स्वशास्त्रे ह्रस्वमक्षरं लघुसंज्ञकं परिभाष्यते। लप्रदेशाः—"लः समुद्रा गणः" (पि० ४।१२) इत्येवमादयः ॥९॥

गन्ते ॥ १० ॥

गृग्रहणमनुवर्त्तते। गृशब्दोपलक्षितस्य ह्रस्वाक्षरस्य पादान्ते विद्यमानस्य गुरुसंज्ञातिदिश्यते। ग इति प्रथमाक्षरप्रतीकेन गुरुशब्दस्य ग्रहणम्। "संयोगे गुरु" इति पाणिनिमुनिनापि स्वशास्त्रे परिभाषितम्। गप्रदेशाः—"गावन्त आपीडः" (पि० ५।२१) इत्येवमादयः ॥१०॥

ध्रादिपरः ॥११॥

ध्र इति व्यञ्जनसंयोगस्योपलक्षणम्। ध्र आदिर्येषां ते ध्रादयः (बहुव्रीहिसमासः)। आदिपदेन विसर्जनीयानुस्वारजिह्वामूलीयोपध्मानीयानामप्युपादानम्। ध्रादयः परे यस्मात् स ध्रादिपरः (पञ्चमीबहुव्रीहिः)। ततश्चायं सूत्रार्थः सम्पद्यते—व्यञ्जनसंयोगात्पूर्वस्य ह्रस्ववर्णस्यानुस्वारविसर्जनीयजिह्वामूलीयोपध्मानीयेभ्यश्च पूर्वस्य वर्णस्य गुरुसंज्ञोपदिश्यते। यथा—वर्ण इति पदे वकारस्य ह्रस्वस्य गुरुसंज्ञातिदिश्यते। "संयोगे गुरु" 'संयोगे परतो ह्रस्वमक्षरं गुरुसंज्ञकं भवति, इति पाणिन्युपदेशात् संयुक्ताक्षर-

पूर्वस्य ह्रस्वस्य वर्णस्य गुरुसंज्ञा ॥११॥

हे ॥१२॥

गकारस्यानुवृत्तिरिष्यते। हे इतिपदेन द्वे मात्रे उपलक्ष्येते। ततश्चायं सूत्रार्थः-द्विमात्रिकदीर्घवर्णस्य गसंज्ञा प्रतिपाद्यते ॥१२॥

लौ सः ॥१३॥

स इत्यनेन गकारः परामृश्यते। स गकारो गणनाकाले द्विमात्रा (द्वौ लघू कृत्वा) परिगणनीयः। यथा—

"सा यतिनृपतेरार्या, वृत्तिर्हृदि संबभूव विरतिमयी।
सर्वस्वविसर्जनतो यात्मविकासं तदा चकमे ॥"
(दयानन्ददिग्विजये १२।१३८)

अत्र गणनाकाल आर्याच्छन्दसः प्रथमार्द्धे त्रिशन्मात्रा भवन्ति द्वितीयार्द्धे च सप्तविंशतिमात्रा भवन्ति ॥१३॥

ग्लौ ॥१४॥

अधिक्रियतेऽयमाशास्त्रपरिसमाप्तेः। अभिविधावत्राङ् न मर्यादायाम्। गश्च लश्च तौ ग्लौ गुरुलघू इति भावः। कुत्रचिद् भेदान्तरं न निशम्यते तत्र "ग्लौ" इत्युपस्थितं द्रष्टव्यम्। अष्टसंख्यापरिगणनायां 'गायत्र्या वसवः' (पि० ३।३) इति सूत्रं यथानुवर्त्यते तथायं वेदितव्यः ॥१४॥

अष्टौ वसव इति ॥१५॥

इह शास्त्रे वसव इत्युच्यमानेऽष्टसंख्योपदिष्टा गुरुलघुस्वरूपा वर्णा उपादीयन्ते। लौकिकच्छन्दसां प्रसिद्धये सूत्रमिदमुपलक्ष्यते। तेन चतुर्णां समुद्राः पञ्चानामिन्द्रियाणि भूतानि च, षण्णामृतवा शास्त्राणि च, इत्यादयो नामविशेषा लौकिकवृत्तेभ्यो विज्ञेयाः।

इतिकारोऽध्यायपरिसमाप्तये वेदितव्यः । अन्येषामपि वैदिकशास्त्राणां शैलीयं लक्ष्यते शास्त्रावसानप्रसङ्ग एवंविधानि पदानि विन्यस्यन्ते यथा—"अ अ इति" (पा० ८।४।६७) । "पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति" (योग० ४।३४) ॥१५॥

इह धी-आदीनामुपादानप्रयोजनं निगद्यते— अध्ययनाद् धीर्भवति । यस्य धीस्तस्य श्रीः, बुद्धिपूर्वकत्वाद् विभूतेः । यस्य श्रीस्तस्य स्त्री, अर्थमूलकत्वाद्गार्हस्थ्यस्य । 'वरासाय्' इत्यनेन सर्वेषां स्त्रीसाधनोपायानां बुद्धेरुपायस्य माहात्म्यं प्रदर्शयति । तत्राह शिष्यः—'का गुहा' ? गुहाशब्दः स्थानवाचकः । का गुहा यत्रासौ तिष्ठति ? उपाध्यायो ब्रूते—'वसुधा' इति । पृथिव्यां लभ्यते धीर्नात्र विषादो विधेयः । पुनरपि पृच्छति शिष्यः—'सा ते क्व' ? सा धीस्त्वयोपदिष्टा वसुधायां क्व स्थितेन लभ्यते ? गुरुराह—गृहे । गुरुगृहे स्थितेनेति भावः । पुनरप्यनुयुङ्क्ते विनेयः—'कदा स' ? स गृहस्थः पुरुषः कदा कस्मिन् काले तां धियं लभते । गुरुः प्रतिवदति—"ध्रादिपरः" । धारणार्थावगमपरायणोऽसौ यदा भवेत् तदा धियं प्राप्नोति । पुनरपि प्रश्नः— "किं वद" किं कुर्वन्नसौ तां धियं विन्दतीति वद । तत्रोत्तरम्— 'न हसन्' । हासादिचापल्यमनुपाददानोऽमूं धियमश्नुत इत्याशयः ॥१५॥

इति श्रीमुनिमेधाव्रताचार्यविरचितायां व्रतिमङ्गलायां छन्दःसूत्रवृत्तौ प्रथमोऽध्यायः ॥१॥

# ॐ अथ द्वितीयोऽध्यायः ॐ

छन्दः ॥१॥

शास्त्रावसानपर्यन्तोऽधिकारोऽयम् । इतोऽग्रे यदुदाहरिष्याम-श्छन्दस्तत्रोपस्थितं विज्ञेयम् । छन्दःपदेनाक्षरगणनाश्चितच्छन्दोऽत्रोदीर्यते ॥१॥

गायत्री ॥२॥

द्वादशसूत्रावसानपर्यन्तमधिकारोऽयम् । "तान्युष्णिगनुष्टुब्-बृहतीपङ्क्तित्रिष्टुब्जगत्यः" (पि० २।१४) इति सूत्रात्पूर्वं यदभिधीयते छन्दस्तद् गायत्रीनामकं ज्ञातव्यम् ॥२॥

दैव्येकम् ॥३॥

एकाक्षरं छन्दो दैवीगायत्रीति सञ्ज्ञायते । तत्रायं प्रदर्शनोपायः चतुरङ्गक्रीडायामिव चतुःषष्टिकोष्ठान् लिखित्वा तत्र प्रथमपंक्त्या-वार्षी नाम विन्यस्य द्वितीयादिकोष्ठेष्वङ्कानामुपरि गायत्र्यादिसप्त-च्छन्दसां नामानि लिखेत् । ततो द्वितीयायां पंक्तौ प्रथमकोष्ठे दैवीशब्दं विन्यसेत् संज्ञाज्ञापनार्थम् । द्वितीये एकसंख्याङ्कं (१) लिखेत् । "चतुःषष्टिपदे लिखेत्" अग्निपुराणे ( ३१९ । ५ ) इत्युक्तेः ॥३॥

आसुरी पञ्चदश ॥४॥

आसुरी गायत्री पञ्चदशाक्षरा भवति । तानि चाक्षराणि "ग्लौ" (पि० १।१४) इत्यधिकाराद् गुरूणि लघूनि वा यथासम्भवं विलोकनीयानि । अत्र तृतीयायां पंक्तौ प्रथमे कोष्ठ आसुरीशब्दं लिखित्वा द्वितीये कोष्ठे पञ्चदशसंख्याङ्कं (१५) लिखेत् ॥४॥

## प्राजापत्याष्टौ ॥५॥

प्राजापत्या गायत्र्यष्टाक्षरा भवति। यत्र क्वचिद् वेदेऽष्टाक्षरं छन्दस्तत् प्राजापत्या गायत्रीति विज्ञेयम्। चतुर्थ्यामत्र पंक्तौ प्रथमे कोष्ठे प्राजापत्याशब्दं लिखित्वा द्वितीयेऽष्टसंख्याङ्कं (८) लिखेत् ॥५॥

## यजुषां षट् ॥६॥

यजुषां गायत्री षडक्षरा भवति। यत्र क्वचिद् वेदे षडक्षरं छन्दस्तद् याजुषी गायत्रीति सञ्ज्ञायते। अत्र पञ्चम्यां पक्तौ प्रथमे कोष्ठे याजुषीशब्दं विन्यस्य द्वितीये षट्संख्याङ्कं (६) लिखेत् ॥६॥

## साम्नां द्विः ॥७॥

षडित्यनुवर्तते। द्विरिति क्रियाभ्यावृत्तिदर्शनात् करोतिरध्याह्रियते। द्वादशाक्षरेत्यभ्यावृत्त्या क्रियते। तेन द्विःकृता द्विगुणिता षट्-संख्या साम्नां गायत्री भवति। यत्र क्वचिद् वेदे द्वादशाक्षरं छन्दस्तत् साम्नां गायत्रीत्यभिधीयते। अत्र षष्ठ्यां पङ्क्तौ प्रथमे कोष्ठे सामशब्दं लिखित्वा द्वितीये द्वादशसंख्याङ्कं (१२) लिखेत्। "साम्नां स्याद् द्वादशाक्षरा" (अग्निपुराणे ३१९।२) इति वचनात् ॥७॥

## ऋचां त्रिः ॥८॥

षडित्यनुवर्तते। अत्रापि पूर्ववत् क्रियाभ्यावृत्तिः, तेन त्रिगुणा षट्संख्या ऋचां गायत्री जायते। यत्र क्वचिद् वेदेऽष्टादशाक्षरं छन्दः सा ऋचां गायत्री ज्ञेया। अत्र सप्तमपङ्क्तौ प्रथमे कोष्ठ ऋक्शब्दं निवेश्य द्वितीयेऽष्टादशसंख्याङ्कं ( १८ ) लिखेत्। "ऋचामष्टादशवर्णा स्यात्" ( अग्निपुराणे ३१९।२ ) इति वचनात् ॥ ८ ॥

द्वौ द्वौ साम्नां वर्धेत ॥९॥

गायत्रीति पदमनुवर्त्यम् । साम्नां पङ्क्तौ गायत्री द्वौ द्वौ संख्याङ्कौ गृहीत्वा वर्धिता पूर्वात् पूर्वात् समेधेत यावदष्टमं कोष्ठं प्राप्नोति । तत्र साम्नां पङ्क्तौ तृतीयादिषु कोष्ठेषु क्रमेण समेधितान्यक्षराण्यङ्केन विन्यसेत् ॥ ९ ॥

त्रींस्त्रीनृचाम् ॥ १० ॥

गायत्रीति पदमनुवर्तनीयम् । ऋचां गायत्री त्रींस्त्रीन् संख्याङ्कानुपादाय पूर्ववदेधेत । अस्यामप्यृचां पंक्तौ तृतीयादिषु कोष्ठेषु त्रिसङ्ख्याङ्कक्रमेण वृद्धपङ्क्तिं निवेशयेत् ॥१०॥

चतुरश्चतुरः प्राजापत्यायाः ॥११॥

प्राजापत्यायाः पङ्क्तौ गायत्री चतुरश्चतुरः संख्याङ्कानुपादाय वर्धेत । अत्रापि तृतीयादिषु कोष्ठेषु पूर्ववदेव विन्यासः ॥ ११ ॥

एकैकं शेषे ॥ १२ ॥

अनुक्तः शेषः परिभाष्यते । यत्र गायत्र्यां संख्योपचयो नोक्तः सैकैकं संख्याङ्कं गृहीत्वोपचिता स्यात् । दैवी याजुषी

च शेषशब्देन निगद्यते। आसुर्या विशेषप्रतिपादनाद् 'जह्यादासुरी' ( पि० २।१३ ) इति प्रामाण्यान्न शेषशब्देनोदीर्यते। तेन दैवी तृतीयादिषु कोष्ठेषु क्रमेणैकैकमक्षरं समादायोपचीयेत, तथैव याजुषी वर्धनीया ॥ १२ ॥

जह्यादासुरी ॥१३॥

एकैकमिति पदमनुवर्तनीयम्। आसुरी गायत्री एकैकमक्षरं त्यजेत्। उत्तरेषु कोष्ठेषु संवृद्धायां ह्रासो विधीयते। तेऽङ्काः क्रमेण लेखनीयाः ॥ १३ ॥

तान्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यः ॥१४॥

तानीति छन्दांसि गायत्र्याः पुरस्ताद् उष्णिग्-अनुष्टुब्बृहती-पंक्ति-त्रिष्टुब्-जगत्यभिधानानि क्रमेण भवन्ति ॥१४॥

तिस्रस्तिस्रः सनाम्न्य एकैका ब्राह्म्यः ॥१५॥

याजुषीं पङ्क्तिमारभ्य तिस्रो याजुषी साम्नी आर्ची चेति गायत्र्यो मिलिता एका षट्त्रिंशदक्षरा ब्राह्मी गायत्री सम्पद्यते। सनाम्न्य इत्येकसंज्ञा इत्यर्थः। तिस्रस्तिस्र इति वीप्सया परेषा-मुष्णिगादीनामिह ग्रहणम्। तथैकैकेति वीप्सया ता एव ब्राह्म्यो जायन्त इति विधीयते। ब्राह्म्य इति गायत्र्यादीनां जगती-पर्यन्तानां विशेषणमेव। याजुषी साम्नी आर्ची चोष्णिङ् मिलिता

एकीकृता द्वाचत्वारिंशदक्षरा ब्राह्म्युष्णिग् भवति। एवं तिस्रोऽनुष्टुभः सङ्गताः सत्योऽष्टाचत्वारिंशदक्षरैका ब्राह्म्यनुष्टुब् भवति। ता एव तिस्रो बृहत्यः संगताः सत्यश्चतुःपञ्चाशदक्षरैका ब्राह्मी-बृहती भवति। ता एव तिस्रः पङ्क्तयः सगता षष्टचक्षरैका ब्राह्मी पङ्क्तिर्भवति। ता एव तिस्रस्त्रिष्टुभः संगताः षट्षष्टचक्षरैका ब्राह्मी त्रिष्टुब् जायते। ता एव तिस्रो जगत्यः संगता द्वासप्तत्यक्षरैका ब्राह्मी जगती भवति। अत्राष्टम्यां पङ्क्तौ प्रथमे कोष्ठे ब्राह्मीशब्दं विन्यस्य द्वितीयादौ क्रमेण गायत्र्यादीनां षट्त्रिशद् (३६) आद्यङ्कान् विन्यसेत् ॥१५॥

प्राग्यजुषामार्ष्य इति ॥१६॥

तिस्रस्तिस्र इत्यनुवर्तते। यजुषां पंक्तेः प्राक् प्राजापत्या आसुरी दैवीति यास्तिस्रो गायत्र्यस्ताः सगताः सत्यश्चतुर्विंशत्यक्षरैकाऽऽर्षी गायत्री भवति। ता एव तिस्र उष्णिहः सगता अष्टाविंशत्यक्षरैकाऽऽर्षी उष्णिक् सम्पद्यते। ता एव तिस्रोऽनुष्टुभः संगता द्वात्रिंशदक्षरैकाऽऽर्षी अनुष्टुब् जायते। ता एव तिस्रो बृहत्यः संगता षट्त्रिंशदक्षरैकाऽऽर्षी बृहती भवति। ता एव तिस्रः पङ्क्तयः संगताश्चत्वारिंशदक्षरैकाऽऽर्षी पङ्क्तिर्भवति। ता एव तिस्रस्त्रिष्टुभः संगताश्चतुश्चत्वारिंशदक्षरैकाऽऽर्षी त्रिष्टुब् निष्पद्यते। ता एव तिस्रो जगत्यः सम्पृक्ता अष्टाचत्वारिंशदक्षरैकाऽऽर्षी जगती भवति। अत्र प्रथमायां पङ्क्तौ प्रथमे कोष्ठ आर्षीशब्दं व्यवस्थाप्य द्वितीयादिषु क्रमेण चतुर्विंशति (२४) आद्यङ्कान् विन्यसेत्। प्रथमपङ्क्ते द्वितीयादिकोष्ठेष्वङ्कानामुपरि गायत्र्यादीनि नामानि लिखेत्। अयं स्पष्टतरः प्रदर्शनोपायः ॥१६॥

| छन्दः | | गायत्री | उष्णिक् | अनुष्टुप् | बृहती | पंक्ति | त्रिष्टुप् | जगती | अङ्कवृद्धिक्षयौ |
|---|---|---|---|---|---|---|---|---|---|
| आर्षी | = | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ | ४ वृद्धिः |
| दैवी | ३ | १ | २ | ३ | ४ | ५ | ६ | ७ | १ वृद्धिः |
| आसुरी | २ | १५ | १४ | १३ | १२ | ११ | १० | ९ | १ क्षयः |
| प्राजापत्या | १ | | १२ | १६ | २० | २४ | २८ | ३२ | ४ वृद्धिः |
| याजुषी | १ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ वृद्धिः |
| साम्नी | २ | १२ | १४ | १६ | १८ | २० | २२ | २४ | २ वृद्धिः |
| आर्ची | ३ | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ | ३ वृद्धिः |
| ब्राह्मी | = | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ | ६ वृद्धिः |

उदाहरणानि—

आर्षी गायत्री— अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥ (ऋक् १।१।१।१)

दैवी गायत्री— ओम् ।

आसुरी— आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम् ॥

दैव्युष्णिक्— भुवः ॥

दैवी बृहती— भूर्भुवः स्वः ॥

प्राजापत्या गायत्री—अग्निर्ज्योतिर्ज्योतिरग्निः ॥ (यजु० ३।९)

साम्नी त्रिष्टुप्— महिराधो विश्वजन्यं दधानान् भरद्वाजान्-
त्साञ्जयो अभ्ययष्ट ॥ ( ऋक्० अ० ४
अनु० ७ व० ३४ मं० २५ )
पुरूतमं पुरूणां स्तोतॄणां विवाचि ॥
( ऋक् ६।४५।२९ )

आर्ची गायत्री— अग्ना३ इ पत्नीवन्त्सजूर्देवेन त्वष्ट्रा सोमं
पिब स्वाहा ॥ ( यजु० ८।१० )

आर्ची त्रिष्टुप्— 3 23 3 1 2 3 3 1 2
अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं
3 2 3 1 2 3 1 2 3 2
जनयत प्रशस्तम् । दूरेदृश गृहपतिमथव्युम् ॥
( साम० उ० प्र० ६ अ० १ मं० १० )

ब्राह्मी त्रिष्टुप्— परैतु मृत्युरमृतं न आगाद् वैवस्वतो नोऽभयं
कृणोतु ।
परं मृत्यो अनुपरेहि पन्थां यस्ते स्व इतरो देव-
यानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः
प्रजां रीरिषो मोत वीरान् ॥ (ऋ० १०।१८।१)

याजुषी— वर्षवृद्धमसि (यजु० तै० १।१।२)

साम्नी — इमं वृषणं कृणुतैकमिन्माम् ॥
(सा० पू० ६ । ३ ।१० । ६ )

आर्ची— प्रेष्ठमु प्रियाणां स्तुह्यासावतिथिम् । अग्नि रथानां यमम् ॥ ( ऋ० ८ । १०३ । १० )

ब्राह्मी— ब्रह्मणस्त्वा परस्पायाः । क्षत्रस्य तनुवः पाहि । विशस्त्वा धर्मणा । वयमनुक्रमाम सुविताय नव्यसे ॥ ( य० तै० आ० ४ । ११ । ७ )

इति श्रीमन्मुनिमेधाव्रताचार्यरचितायां व्रतिमङ्गलायां
छन्दःसूत्रवृत्तौ द्वितीयोऽध्यायः ॥२॥



# * अथ तृतीयोऽध्यायः *

पादः ॥१॥

अध्यायावसानान्तोऽयमधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामस्तत् पाद इत्यधिकृतं वेदितव्यम्। प्रतिपादयिष्यति च "गायत्र्या वसवः" (पि० ३।३) इति ॥१॥

इयादिपूरणः ॥२॥

पाद इत्यनुवर्तनीयम्। इयादिपूरणो यस्य स इयादिपूरणः। सूत्र आदिकरणेन उवादयोऽपि गृह्यन्ते (उवादय इत्यादिशब्देन यण्सम्प्रसारणसवर्णदीर्घगुणवृद्धिव्यूहादयो गृह्यन्ते) तत्रायमर्थः—यत्र गायत्र्यादिच्छन्दसि पादस्याक्षरसंख्या न पूर्यते तत्रेयादिभिः पूरणीया। यथा –'तत्सवितुर्वरेणियम्' (ऋ० ३।४।१०।५), दिवं गच्छ सुवः पत' (यजु० १२।४) इत्यादयः ॥२॥

गायत्र्या वसवः ॥३॥

पाद इत्यनुसरति। परिभाषेयम्। गायत्र्याः पादो वसवोऽष्टाक्षराणि भवन्ति। यत्र गायत्र्याः पादोऽभिधास्यते तत्राष्टाक्षरो ग्राह्यः ॥३॥

जगत्या आदित्याः ॥४॥

पाद इत्यनुयाति। जगत्याः पादो द्वादशाक्षरो विद्यते। यत्र क्वचिज्जागतः पादस्तत्र द्वादशाक्षरोऽवगम्येत ॥४॥

विराजो दिशः ॥ ५ ॥

पाद इत्यनुकर्षणीयम्। यत्र क्वचिद् वैराजः पाद इति निगद्यते तत्र दशाक्षरो विज्ञेयः ॥ ५ ॥

त्रिष्टुभो रुद्राः ॥ ६ ॥

त्रैष्टुभः पाद इत्युच्यमाने सर्वत्रैकादशाक्षर उपादीयते । अस्मिन्नेवाध्याये परिभाषा इमाश्चतस्रः सन्ति ॥ ६ ॥

एकद्वित्रिचतुष्पादुक्तपादम् ॥ ७ ॥

एभिश्चतुर्भिर्लक्षणैरुक्तः पादो यस्य तदुक्तपादं छन्दः । यस्य च्छन्दसा यादृशः पादो वर्णितस्तच्छन्दस्तेनैव पादेन क्वचिदेकपात्, क्वचिद्द्विपात्, क्वचित् त्रिपात्, क्वचिच्चतुष्पाद् भवति । गायत्री च त्रिपदव । छन्दोमात्रविषयकमिदम् । लौकिके तु "पादश्चतुर्भागः" ( पि० ४ । १० ) इति विशेषो ऽग्रे वक्ष्यते । चतुर्भिरष्टाक्षरैः पादैरनुष्टुबेव भवेत् ॥ ७ ॥

अथ गायत्र्यधिकारः—

आद्यं चतुष्पादृतुभिः ॥ ८ ॥

सूत्र आद्यमिति पदेन गायत्री-अभिधीयते । ऋतुशब्देन लक्षणया षडक्षरः पादोऽभिधीयते । तैः पादैश्चतुष्पादं गायत्रं छन्दो जायते । एवं चतुर्विंशत्यक्षराणि निष्पद्यन्ते । यथा—

दोषो गाय बृहद्गाय द्युमद्धेहि ।

आथर्वण स्तुहि देवं सवितारम् ॥ (अथर्व० ६।१।१) ॥८॥

क्वचित्त्रिपादृषिभिः ॥ ९ ॥

क्वचिद् वेदे सप्ताक्षरोपलक्षितैः पादैस्त्रिभिर्गायत्र्येव भवति । एवमेकविंशत्यक्षराणि जायन्ते । यथा—

युवाकु हि शचीनां युवाकु सुमतीनाम् ।

भूयाम वाजदाव्नाम् ॥ ( ऋक् १।१७।४ ) ॥ ९ ॥

## सा पादनिचृत् ॥१०॥

सा इतिपदेन गायत्र्याम्नायते। सैव गायत्री पादनिचृदिति संज्ञां लभते। प्रयोक्तुरदृष्टाभ्युदयसम्बन्धज्ञापनार्थमियं संज्ञा। वेदस्यानादित्वान्महत्त्वेऽपि च न विगीयते ॥ १० ॥

## षट्कसप्तकयोर्मध्येऽष्टावतिपादनिचृत् ॥ ११ ॥

त्रिपादित्यनुवर्तते। प्रथमः पादः षडक्षरः, द्वितीयोऽष्टाक्षरः, तृतीयः सप्ताक्षरः, एवं त्रिभिः पादैर्या गायत्री सातिपादनिचृदित्यभिधीयते। यथा—

प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम्।
अग्निं रथं न वेद्यम्॥ ( ऋ० ८। ८४। १ ) ॥ ११ ॥

## द्वौ नवकौ षट्कश्च नागी ॥ १२ ॥

त्रिपादित्यनुवर्तनीयम्। द्वौ नवाक्षरौ पादौ, षडक्षरस्तृतीय एवं त्रिभिः पादैर्नागी नाम गायत्री भवति। यथा—

अग्ने तमद्याश्वं न स्तोमैः-क्रतुं न भद्रं हृदिस्पृशम्।
ऋद्ध्यामा त ओहैः ॥ ( ऋक् ४। १०।१ ) ॥ १२ ॥

## विपरीता वाराही ॥ १३ ॥

नागी इत्यनुवर्तते। पूर्वोदितैव नागीगायत्री विपरीता यदा भवति तदा वाराही नाम बिभर्ति। प्रथमः षडक्षरः पादो द्वितीयतृतीयौ च नवाक्षरौ पादौ। यथा—

अग्ने मृड महाँ (१) असि य ईमा देवयुं जनम् (२)।
इयेथ बर्हिरासदम् (३) (ऋ० ४।९।१)
वीतं स्तुके स्तुके (१) युवमस्मासु नियच्छतम् (२)।
प्र प्र यज्ञपतिं तिर (३)॥ (तै० आ० प्र० ३।११।२०)

प्रथममन्त्रे 'इया इथ' इति सन्धिच्छेदान्नवाक्षरत्वम् । द्वितीये च 'पर' इति व्यूहान्नवाक्षरत्वम् 'इयादिपूरणः' (पि० ३।२) इति सूत्रप्रामाण्यात् ॥१३॥

षट्कसप्तकाष्टकैर्वर्धमाना ॥१४॥

षडक्षरः प्रथमः पादः, द्वितीयः सप्ताक्षरः, तृतीयोऽष्टाक्षर इत्थं त्रिभिः पादैः समेधमाना वर्धमाना नाम्नी गायत्री भवति । यथा—

त्वमग्ने यज्ञानां (१) होता विश्वेषां हितः (२) ।
देवेभिर्मानुषे जने (३)॥ (साम० पू० १।२) ॥१४॥

विपरीता प्रतिष्ठा ॥१५॥

वर्धमाना इत्यनुवर्तते । सैव वर्धमाना नाम्नी गायत्री विपर्यस्ता प्रतिष्ठा नामिका गायत्री जायते । अष्टाक्षरः प्रथमः पादः, द्वितीयः सप्ताक्षरः षडक्षरस्तृतीयः । यथा—

आपः पृणीत भेषजं (१) वरूथं तन्वे३ मम (२) ।
ज्योक् च सूर्यं दृशे (३)॥ (ऋ० १।२३।२१) ॥१५॥

तृतीयं द्विपाज्जागतगायत्राभ्याम् ॥१६॥

तृतीयशब्देनैतदध्यायस्थसूत्रपाठक्रमापेक्षया विराजमाह । तथा च गदितम् 'विराजो दिशः' (पि०३।५) इति । यदा द्वादशाक्षरोऽष्टाक्षरश्च पादो भवेत् ततस्ताभ्यां द्विपाद्विराट् नाम्नी गायत्री भवति । यथा—

नृभिर्येमानो हर्यतो विचक्षणो– (१)
राजा देवः समुद्रियः(२)॥ (ऋ० ९।१०७।१६) ॥१६॥

त्रिपात्त्रैष्टुभैः ॥१७॥

तृतीयमिति पदमनुवर्तनीयम् । एकादशाक्षरैः त्रिपाद्विराट् नाम्नी गायत्री भवति । त्रिष्टुप्-शब्देनैकादशाक्षराणां ग्रहणमिष्यते । 'त्रिष्टुभो रुद्राः' (पि० ३।६) इति प्रामाण्यात् । उदाहरणं यथा—

द्रुहीयन्मित्रधितये युवाकु (१) राये च नो मिमीतं वाजवत्यै । (२)
इषे च नो मिमीतं धेनुमत्यै (३)॥ (ऋ० १।१२०।९) ॥१७॥

इति गायत्र्यधिकारः ॥



अथोष्णिगधिकारः—

उष्णिग्गायत्रौ जागतश्च ॥१८॥

यत्र गायत्रावष्टाक्षरौ पादौ जागतश्च द्वादशाक्षर एवं त्रिभिः पादैः 'उष्णिक्' नाम छन्दो भवति । अत्र च पादक्रमो न विवक्षितः पादगणनामात्रं विधीयते ॥१८॥

ककुम्मध्ये चेदन्त्यः ॥१९॥

उष्णिग् इत्यनुवर्तते । गायत्रयोः पादयोर्मध्ये जागतश्चेत्पादो भवति तदेयम् उष्णिक् ककुप्संज्ञां प्राप्नोति । यथा—

युष्माकं स्मा रथाँ अनु (१) मुदे दधे मरुतो जीरदानवः (२) ।
वृष्टी द्यावो यतीरिव (३) ॥ (ऋ० ५।५३।५) ॥१९॥

पुर उष्णिक् पुरः ॥२०॥

स एव पादो जागतश्चेत् प्रथम आयाति गायत्रौ च परतस्तदा

'पुर उष्णिक्' इत्यभिधानं भवति । यथा –

अप्स्वन्तरमृतमप्सु भेषज (१) मपामुत प्रशस्तये (२) ।
देवा भवत वाजिनः (३) ।। (ऋ० १।२३।१९) ।।२०।।

परोष्णिक् परः ।।२१।।

इत्थं जागतः पादः परतश्चेद् भवति पूर्वौ च गायत्रौ तदा परोष्णिक्-नामकच्छन्दो निष्पद्यते । "उष्णिग्गायत्रौ जागतश्च" (पि०३।१८) इत्यनेन गतार्थमेतत् । विशेषसंज्ञाविधानार्थं पुनरुच्यते । प्रथमसूत्रे (पि० ३।२०) उष्णिग्ग्रहणमधिकारार्थम् । उदाहरणं यथा—

अग्ने वाजस्य गोमत (१) ईशानः सहसो यहो (२) ।
अस्मे धेहि जातवेदो महि श्रवः (३) ।। (ऋ० १।७९।४) ।।२१।।

चतुष्पादृषिभिः ॥२२॥

ऋषिभिरिति पदेन सप्तसंख्याया ग्रहणमिष्यते "ऋषयः (३।९।३०) स्वराः (७।६।३०) इति सप्त" इति वचनात् । सप्ताक्षरैश्चतुर्भिः पादैः 'उष्णिग्' एव सम्पद्यते । यथा—

नदं व ओदतीनां (१) नदं योयुवतीनाम् । (२)
पतिं वो अघ्न्यानां (३) धेनूनामिषुध्यसि ।। (४)
(ऋ० ८।६९।२) ।।२२।।

अत्र मन्त्रे 'अघ्न्यानाम्' इत्यत्र 'अघ्नियानाम्' इतीयादिशब्देन पूर्तिः क्रियते ।

चतुरुत्तरवृद्धयारम्भादूर्ध्वं स्निह्यतीत्युष्णिक् । "उष्णिग्

उत्स्नाता भवति। स्निह्यतेर्वा स्यात् कान्तिकर्मणः । उष्णीषिणी-वेत्यौपमिकम्" इति यास्कः (नि० ७।१२) । अयमेवोष्णिक्शब्द आकारान्तोऽपि दृश्यते, यथा—"उष्णिहा छन्द इन्द्रियम्" (यजु० (२१।१३) "बृहत्युष्णिहा ककुप्सूचीभिः शम्यन्तु त्वा" (यजु० २३। ३३) "शृणातु ग्रीवाः प्रशृणातूष्णिहा वृत्रस्येव शचीपतिः" (अथर्व० ६।१३४।१) ।।२२।।

इत्युष्णिगधिकारः ।

---

अथानुष्टुबधिकारः—

## अनुष्टुब्गायत्रैः ।।२३।।

चतुष्पादिति पदमनुसरति। "गायत्र्या वसवः" (पिं० ३।३) इति वचनाद् गायत्रीपदेनाष्टाक्षरोपादानम् । गायत्रैरष्टाक्षरैः पादै-श्चतुष्पाच्छन्दोऽनुष्टुप्-संज्ञकं जायते। यथा—

सहस्रशीर्षा पुरुषः (१) सहस्राक्षः सहस्रपात् (२)।
स भूमिं सर्वत स्पृत्वा (३) ऽत्यतिष्ठद्दशाङ्गुलम् (४) ।।
(यजु० ३१।१)

ऋग्वेदे [१०।९०।१] 'सर्वत स्पृत्वा' इत्यस्य स्थाने 'विश्वतो वृत्वा' इति मन्त्रांशो विलसति ।।२३।।

## त्रिपात्क्वचिज्जागताभ्यां च ।।२४।।

अनुष्टुबिति पदमनुकर्षणीयम्, चकाराद् गायत्रग्रहणं च। गायत्रेणैकेन ततो द्वाभ्यां जागताभ्यां क्वचित् त्रिपादनुष्टुब् भवति ।।२४।।

मध्येऽन्ते च ॥२५॥

जागतयोः पादयोर्मध्येऽन्ते च यदा गायत्रः पादो भवति तदाप्यनुष्टुबेव भवेत् । यथा मध्यपक्ष उदाहरणम्—

पर्यू षु प्र धन्व वाजसातये (१) परि वृत्राणि सक्षणिः (२)।
द्विषस्तरध्या ऋणया न ईयसे (३)॥ (ऋ० ६। ११०। १)॥

अत्र 'प्रधन्व' इति 'तरध्या' इति पदयोः उवियाशब्देन [प्रधनुव, अधिया] पादपूर्त्तिः कर्त्तव्या । अन्तपक्ष उदाहरणम्—

मा कस्मै धातमभ्यमित्रिणे नो (१) मा कुत्रा नो गृहेभ्यो
धेनवो गुः (२)। स्तनाभुजो अशिश्वीः (३)॥ (ऋ० १।१२०।८)॥

'अभ्य' इत्यत्र 'अभिय', 'अशिश्वीः' इत्यत्र च 'अशिशुवीः' इति पादपूर्त्तिर्विधेया ।

"अनुष्टुबनुष्टोभनात् । गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणम्" इति यास्कः (नि० ६।१२।६)॥२५॥

इत्यनुष्टुबधिकारः ॥



अथ बृहत्यधिकारः—

बृहती जागतस्त्रयश्च गायत्राः ॥२६॥

एको जागतः पादस्त्रयश्च गायत्राः पादास्तदा बृहतीनाम छन्दो भवति । यथा—

मत्स्वा सुशिप्र हरिवस्तदीमहे (१) त्वे आ भूषन्ति वेधसः(२)।
तव श्रवांस्युपमान्युक्थ्या (३) सुतेष्विन्द्र गिर्वणः (४)॥
(ऋ० ८।९९।२) ॥२६॥

पथ्या पूर्वश्चेत्तृतीयः ॥२७॥

'बृहती जागतस्त्रयश्च गायत्रा' इति सर्वं सूत्रमनुवर्तते । पूर्वः पादो जागतो यदि तृतीयो भवति, अन्ये च गायत्रा भवन्ति तदासौ बृहती पथ्या-नामकं छन्दो भवति । यथा—

मा चिदन्यद्विशंसत (१) सखायो मा रिषण्यत (२) ।
इन्द्रमित्स्तोता वृषणं सचा सुते (३) मुहुरुक्था च शंसत (४) ॥
(ऋ० ८।१।१) ॥२७॥

न्यंकुसारिणी द्वितीयः ॥२८॥

'बृहती जागतस्त्रयश्च गायत्राः' इति सूत्रं 'पूर्वश्चे'दिति पदश्चानुवर्तते । पूर्वश्चेज्जागतः पादो द्वितीयो भवति शेषाश्च गायत्रा भवन्ति तदा न्यंकुसारिणी नाम्नी बृहती सजायते यथा—

मत्स्यपायि ते महः (१) पात्रस्येव हरिवो मत्सरो मदः (२) ।
वृषा ते वृष्ण इन्दु (३) र्वाजी सहस्रसातमः ॥
(ऋ० १।१७५।१)

'मत्स्य' इत्यत्र मत्सिय 'वृष्ण' इत्यत्र वृषण इति पूर्त्यष्टाक्षराणि जायन्ते ॥२८॥

स्कन्धोग्रीवी क्रौष्टुकेः ॥२९॥

'न्यंकुसारिणी' इति पदमनुवर्तनीयम् । इयमेव न्यंकुसारिणी क्रोष्टुकेराचार्यस्य मतेन स्कन्धोग्रीवी नाम छन्दो भवति । अत्र सूत्र आचार्यग्रहणं पूजार्थं वेदितव्यम् ॥२९॥

उरोबृहती यास्कस्य ॥३०॥

न्यंकुसारिणी इति पदमनुवर्तनीयम् । इयमेव न्यंकुसारिणी यास्काचार्यस्य मतेन "उरोबृहती-सञ्ज्ञां प्रतिपद्यते ॥३०॥

उपरिष्टाद् बृहत्यन्ते ॥३१॥

बृहती जागतस्त्रयश्च गायत्राः (पि० ३।२६) इति सूत्राज्जागत इति पदमनुकर्षणीयम् । यदा जागतः पादोऽन्ते भवति तदा उपरिष्टाद्बृहती-संज्ञां प्राप्नोति । यथा—

न तमंहो न दुरितं (१) देवासो अष्ट मर्त्यम् (२) ।
सजोषसो यमर्यमा (३) मित्रो नयन्ति वरुणो अति द्विषः (४) ॥
(ऋ० १०।१२६।१)

मर्त्यम् इत्यत्र मर्तियम् इति पादपूरणेनाष्टाक्षराणि सम्पद्यन्ते ॥३१॥

पुरस्ताद्बृहती पुरः ॥३२॥

स एव जागतः पादः पूर्वश्चेद्भवति शेषाश्च गायत्रा भवन्ति पादास्तदा पुरस्ताद्बृहती नाम प्रपद्यते । यथा—

महो यस्पतिः शवसो असाम्या (१) महो नृम्णस्य तूतुजिः (२) ।
भर्ता वज्रस्य धृष्णोः (३)पिता पुत्रमिव प्रियम् (४) ॥
( ऋ० १० । २२ । ३ )

'बृहती जागतस्त्रयश्च गायत्राः' ( पि० ३।२६ ) इति

सूत्रेणैव विदितार्थमेतत् । तत् क्रियते विशेषसंज्ञाप्रदर्शनार्थम् ॥३२॥

क्वचिन्नवकाश्चत्वारः ॥३३॥

क्वचिद् वेदे नवाक्षराश्चत्वारः पादा आलोक्यन्ते सापि बृहत्येव ज्ञेया । उदाहरणं यथा—

युवं ह्यास्त महो रन्युवं (१)- वा यन्निरततंसतम् (२) ।
ता नो वसू सुगोपा स्यातं (३) पातं नो वृकादघायो (४) ॥
(ऋ० १।१२०।७)

प्रथमतृतीयपादयो'ह्यास्तम्' इत्यत्र 'हियास्तम' 'स्यातम्' इत्यत्र 'सियातम्' इति व्यूहादक्षरपूर्तिः करणीया ॥३३॥

वैराजौ गायत्रौ च ॥३४॥

"विराजो दिशः" (पि० ३।५) इति सूत्राद् 'दिशः' इति शब्देन दशाक्षराणि प्रत्येतव्यानि । यत्र वैराजौ पादौ पूर्वौ दशाक्षरौ भवतस्ततो गायत्रौ च भवतः सापि बृहती समुदीर्यते । यथा—

अग्ने विवस्वदुषसश्चित्रं (१) राधो अमर्त्य ।
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥
(ऋ० १।४४।१)

अत्र द्वितीयपादे 'अमर्त्य' अस्य स्थाने 'अमर्तिय' इति तृतीयपादे च 'त्व' इत्यत्र 'तुव' इति च पादपूर्त्या अष्टाक्षराणि दशाक्षराणि च यथासंख्यं पूरणीयानि ॥३४॥

त्रिभिर्जागतैर्महाबृहती ॥३५॥

त्रिभिर्जागतैः पादैश्छन्दो महाबृहतीति संज्ञायते। यथा—

अजीजनो अमृत मर्त्येष्वाँ (१) ऋतस्य धर्मन्नमृतस्य चारुणः (२)। सदासरो वाजमच्छा सनिष्यदत् (३) ॥ (ऋ० ९।११०।४)

अत्र प्रथमे पादे 'मर्त्येष्वाँ' इत्यत्र 'मर्तियेषुवाँ' इति इयोवपूर्त्या द्वादशाक्षराणि सम्पादनीयानि ॥ "जगत्या आदित्याः" (पि० ३।४) इति सूत्रेण द्वादशाक्षराणि जागतपदेनादीयन्ते ॥३५॥

सतोबृहती ताण्डिनः ॥३६॥

महाबृहती इत्यनुकृष्यते। इयमेव महाबृहती ताण्डिन आचार्यस्य मतेन 'सतोबृहती' इत्यभिधीयते।

"बृहती परिबर्हणादिति यास्कः" (नि० ७।१२।१०)॥३६॥

इति बृहत्यधिकारः ॥

—:०:—

अथ पंक्त्यधिकारः—

पंक्तिर्जागतौ गायत्रौ च ॥३७॥

यदा द्वौ पादौ जागतौ भवतस्ततो गायत्रौ च भवतस्तदा पंक्तिर्नाम छन्दः सम्पद्यते। यथा—

आ विद्युन्मद्भिर्मरुतः स्वर्कै रथे(१) भिर्यात ऋष्टिमद्भिरश्वपर्णैः(२)।
आ वर्षिष्ठया न इषा (३) वयो न पप्तता सुमाया (४) ॥
(ऋ० १।८८।१)

'अश्वपर्णैः' इत्यत्र 'अशवपर्णैः' इत्यनेन पादपूर्त्तिर्विधेया। चतुर्थपादे चैकाक्षराधिक्यात् प्रमाणान्तरं मृग्यम् ॥३७॥

## पूर्वौ चेदयुजौ सतःपंक्तिः ॥३८॥

यत्र पूर्वोद्दिष्टौ पादावयुजौ भवतः प्रथमतृतीयौ पादौ जागताविर्त्यथः, द्वितीयचतुर्थौ च गायत्रौ भवतस्तच्छन्दः सतःपंक्तिर्नाम विद्यते। यथा—

अग्निना तुर्वशं यदुं परावत (१) उग्रादेवं हवामहे (२)।
अग्निर्नयन्नववास्त्वं बृहद्रथं (३) तुर्वीतिं दस्यवे सहः (४)॥
(ऋ० १।३६।१८) ॥३८॥

## विपरीतौ च ॥३९॥

यदा तावेव पादौ विपर्यस्यतस्तदापि सतःपंक्तिरेव जायते। अय भावः—प्रथमतृतीयौ पादौ गायत्रौ द्वितीयचतुर्थौ च जागतौ स्तस्तदापि सतःपंक्तिरेवास्ते। यथा—

य ऋष्वः श्रावयत्सखा (१) विश्वेत्स वेद जनिमा पुरुष्टुतः (२)।
तं विश्वे मानुषा युगे (३) न्द्रं हवन्ते तविषं यतस्रुचः (४)॥
[ऋ० ८।४६।१२]

अत्र चतुर्थपादे 'स्रुचः' इत्यस्य स्थाने 'सरुचः' इति पादपूर्त्तिः कर्त्तव्या ॥३९॥

## प्रस्तारपंक्तिः पुरतः ॥४०॥

यदा जागतौ पादौ पूर्वौ भवतो गायत्रौ च परतः स्यातां तदा प्रस्तारपंक्तिरभिधीयते। यथा—

भद्रमिद्भद्रा कृणवत्सरस्वत्य (१) कवारी चेतति वाजिनीवती(२)।
गृणाना जमदग्निवत् (३) स्तुवाना च वसिष्ठवत् (४)॥
(ऋ० ७।९६।३)

अत्र प्रथमपादे 'सरस्वत्य' इत्यत्र 'सरस्वतिय' इति विधानेन द्वितीयपादे द्वादशाक्षराणि सम्पद्यन्ते। "पंक्तिर्जागतौ गायत्रौ च" (पि० ३।३७) इत्यनेन विदितार्थमिदं संज्ञाविशेषप्रतिपादनार्थं पुनरुच्यते ॥४०॥

आस्तारपंक्तिः परतः ॥४१॥

यदा जागतौ पादौ परस्ताद् भवतो गायत्रौ च पूर्वतो जायेते तदा 'आस्तारपंक्तिः' उदीर्यते। यथा—

भद्रं नो अपि वातय (१) मनो दक्षमुत क्रतुम् (२)।
अधा ते सख्ये अन्धसो विवो मदे (३)
रणन्गावो न यवसे विवक्षसे (४) ॥ (ऋ० १०।२५।१) ॥४१॥

विष्टारपंक्तिरन्तः ॥४२॥

अन्तःपदेन मध्यमार्थो गृह्यते। यदा जागतौ पादौ मध्ये तिष्ठत आद्यन्तयोश्च गायत्रौ तदा विष्टारपंक्तिर्निगद्यते। यथा—

अग्ने तव श्रवो वयो (१) महि भ्राजन्ते अर्चयो विभावसो (२)।
बृहद्भानो शवसा वाजमुक्थ्यं (३) दधासि दाशुषे कवे (४)॥
(ऋ० १०।१४०।१)

अत्र तृतीयपादे 'उक्थ्यम्' इत्यस्य स्थाने 'उक्थियम्' इति पादपूर्तये योजनीयम् ॥४२॥

संस्तारपंक्तिर्बहिः ॥४३॥

यदा तावेव जागतौ पादौ बहिर्भवतो मध्ये च गायत्रौ तदा संस्तारपंक्तिर्व्यवह्रियते। यथा—

पितुभृतो न तन्तुमित्सुदानवः (१) प्रति दध्मो यजामसि (२)।
उषा अप स्वसुस्तमः (३) सं वर्तयति वर्तनिं सुजातता (४)॥
(ऋ० १०।१७२।२) ॥४३॥

अक्षरपंक्तिः पञ्चकाश्चत्वारः ॥४४॥

पञ्चाक्षरैश्चतुर्भिः पादैः 'अक्षरपंक्तिः' नाम छन्दो ज्ञेयम्। ननु चत्वारिंशदक्षरा पंक्तिश्छन्दस्तत्कथं 'पञ्चकाश्चत्वार' इति कथ्यते ? तत्र समाधानम्-"द्वावप्यल्पशः" (पि० ३।४५) इत्यस्मात् सूत्रात् सिंहावलोकितन्यायेनाल्पग्रहणमाकर्षणीयम् । तेन पंक्तेरल्पत्वं विशेषादुदितं भवति । यथा—

पश्वा न तायुं (१) गुहा चतन्तं (२)
नमो युजानं (३) नमो वहन्तम् (४)।
(ऋ० १।६५।१) ॥४४॥

द्वावप्यल्पशः ॥४५॥

पञ्चग्रहणमनुवर्तनीयम् । पञ्चाक्षराभ्यां पादाभ्यामल्पशः पंक्तिर्नाम छन्दो भवति। अस्य छन्दसः क्वचिदेव वेदे व्यवहारो न सर्वत्र। यथा—

सदो विश्वायुः (१) शर्म सप्रथाः (२)। (तै० आ० ४।११)
निगमवचनमत्र मृग्यम् ॥४५॥

पदपंक्तिः पञ्च ॥४६॥

पञ्चका इति पदं सम्बन्धनीयम् । यदा पञ्चाक्षराः पञ्चपादा भवन्ति तदा पदपंक्तिर्नाम छन्दो जायते । यथा—

घृतं न पूतं (१) तनूररेपाः (२) शुचि हिरण्यम् (३)।
तत्ते रुक्मो न (४) रोचत स्वधावः (५)॥
(ऋ० ४।१०।६)

पञ्चमे पाद एकाक्षराधिक्यम्। कात्यायनेन तु "पञ्चकाश्चत्वारः पादाः षट्कश्चैकः" (सर्वा० ४।२) इत्येव सूत्रितम्। प्रमाणमत्र मृग्यं निगमे ॥४६॥

चतुष्कषट्कौ त्रयश्च ॥४७॥

चकारः पञ्चका इति पदानुकर्षणार्थः। यदा प्रथमश्चतुराक्षरः पादो द्वितीयः षडक्षरस्ततस्त्रयः पञ्चाक्षरास्तदा पञ्चपदा पंक्तिरेव विज्ञेया। यथा–

अधा ह्यग्ने(१) क्रतोर्भद्रस्य(२) दक्षस्य साधोः(३)।
रथीर्ऋतस्य(४) बृहतो बभूथ (५)॥ (ऋ० ४।१०।२)

वस्तुतस्त्वत्र क्रमो न विवक्षितः। यथाकथञ्चित्पादत्रयं पञ्चाक्षरम्। एकश्चतुरक्षर एकश्च षडक्षरः पाद इत्यर्थः। अत एव 'द्वौ वा पादौ चतुष्कश्च षट्कश्चैकस्त्रिपञ्चकाः" (ऋ० प्रा० शा० १६।१५) इति शौनकीयलक्षणम्। द्वौ पादौ, एकश्चतुष्कः, एकः षट्कः, त्रयश्च पञ्चाक्षरा भवन्तीति क्रमनैरपेक्ष्येणैव व्याचख्यावुव्वटः ॥४७॥

पथ्या पञ्चभिर्गायत्रैः ॥४८॥

पञ्चभिरष्टाक्षरैः पादैः पथ्या नाम पंक्तिर्जायते। यथा—

यो अर्यो मर्तभोजनं (१) पराददाति दाशुषे (२)।
इन्द्रो अस्मभ्यं शिक्षतु (३) विभजा भूरि ते वसु (४)
भक्षीय तव राधसः (५)॥ (ऋ० १।८१।६) ॥४८॥

जगती षड्भिः ॥४६॥

गायत्रैरिति पदमनुवर्त्यम् । षड्भिर्गायत्रैः पादैर्जगती नाम पंक्तिश्छन्दो भवति । यथा—

महि वो महतामवो(१) वरुण मित्र दाशुषे(२) ।
यमादित्या अभिद्रुहो(३) रक्षथा नेमघं नशद(४)
नेहसो व ऊतयः(५) सुऊतयो व ऊतयः(६) ॥
(ऋ० ८।४७।१)

इति पङ्क्त्यधिकारः ।

अथ त्रिष्टुब्जगत्यधिकारः—

एकेन त्रिष्टुब्ज्योतिष्मती ॥५०॥

त्रिष्टुभः प्रस्तुतत्वात् प्रत्यासन्नत्वाच्च तस्या एव सम्बन्धः । गायत्रैरिति पदमनुवर्तते । एकेन त्रैष्टुभेन पादेनाधिकाराच्च तुर्भिर्गायत्रैः पञ्चपात् त्रिष्टुब् ज्योतिष्मती नाम्नी छन्दो भवति । त्रैष्टुभेन 'पञ्चभिर्गायत्रैः' (पि० ३।४८) इति व्याहृते चत्वार एव गायत्राः पादा लभ्यन्ते । यथोपाध्यायेन सह पञ्च शिष्या आगता इति गदिते उपाध्यायपञ्चमाः प्रतीयन्ते । उपाध्यायपञ्चमा इति पदे बहुव्रीहिसमासः—उपाध्यायः पञ्चमो येषु त उपाध्यायपञ्चमाः ॥५०॥

तथा जगती ॥५१॥

एकेन, ज्योतिष्मती, गायत्रैरिति पदान्यनुवर्तन्ते । एकेन जागतेत पादेन चतुर्भिर्गायत्रैः पादैः पञ्चपाज्जगती ज्योतिष्मती संज्ञायते ॥५१॥

## पुरस्ताज्ज्योतिः प्रथमेन ॥५२॥

गायत्रैः, त्रिष्टुबिति च पदे अनुवर्तेते। प्रथमेन त्रैष्टुभेन पादेन शेषैश्च गायत्रैः पादैः पुरस्ताज्ज्योतिर्नाम त्रिष्टुब् भवति। यथा—

कृधी नो अह्रयो देव सवितः(१) स च स्तुषे मघोनाम्(२)।
सहो न इन्द्रो वह्निभि(३) र्न्येषां चर्षणीनां (४)
चक्रं रश्मि न योयुवे(५)॥ (ऋ० १०।९३।९)

द्वितीयचतुर्थपादयोर्व्यूहेनाक्षरपूर्तिर्यथा—'स्तुषे' इत्यत्र सतुषे। 'न्येषां चर्षणीनाम्' इत्यत्र नियेषां चरषणीनामिति पादपूर्तिः।

पूर्वेणैव गतार्थत्वाद् विशेषसंज्ञाबोधनायेदम्। 'तथा जगती' इत्यनुवर्तनीयम्, तेनाद्येन जागतेन पादेन चतुर्भिश्च गायत्रैः पुरस्ताज्ज्योतिर्नाम जगती भवति। यथा—

नमोवाके प्रस्थिते अध्वरे नरा (१) विवक्षणस्य पीतये(२)।
आ यातमश्विना गत (३) मवस्युर्वामहं हुवे (४)
धत्तं रत्नानि दाशुषे (५)　(ऋ० ८।३५।२३) ॥५२॥

## मध्येज्योतिर्मध्यमेन ॥५३॥

यदा मध्यमस्त्रैष्टुभः पादो भवति, उभयतश्च द्वौ द्वौ गायत्रौ तदा मध्यज्योतिर्नाम त्रिष्टुब् भवति। मध्येज्योतिरिति पदेऽलुक्-समासः। उदाहरणं यथा—

बृहद्भिरग्ने अर्चिभिः(१) शुक्रेण देव शोचिषा। भरद्वाजे समिधानो यविष्ठ्य(३) रेवन्नः शुक्र दीदिहि(४) द्युमत्पावक दीदिहि(५)॥
(ऋ० ६।४८।७)

तथा जगतीत्यनुवर्तनीयम् । एकेन गायत्रेण मध्यमेन तृतीयेन, उभयतश्च जागताभ्यां प्रथमद्वितीयाभ्यां चतुर्थेन च मध्येज्योतिर्जगती भवति । तत्रोदाहरणम्—

यद्वा यज्ञं मनवे संमिमिक्षथु-
रेवत्काण्वस्य बोधतं बृहस्पतिम् ।
विश्वान् देवाँ अहं हुव
इन्द्राविष्णू अश्विनावाशुहेषसा ।।
(ऋक्० ८।१०।२) ।।५३।।

उपरिष्टाज्ज्योतिरन्तेन ।।५४।।

यदा चत्वारो गायत्राः पादा भवन्ति, अन्ते च त्रैष्टुभस्तदा उपरिष्टाज्ज्योतिर्नाम त्रिष्टुब् भवति । यथा—

संवेशिनीं संयमिनीं (१) ग्रहनक्षत्रमालिनीम् (२) ।
प्रपन्नोऽहं शिवां रात्रीं (३) भद्रे पारमशीमहि (४)
भद्रे पारमशीमह्यों नमः (५) ।। (ऋ० परिशिष्टे ८।७।१४।४)

पञ्चमे पादे 'मह्यों नमः' इति स्थाने 'महि ओं नमः' इति व्यूहेनाक्षरपूर्तिर्विधेया ।

तथा जगतीत्यनुवर्तनीयम् । तेनान्तेन जागतेन पादेन शेषैश्च गायत्रैश्चतुर्भिः पादैरुपरिष्टाज्ज्योतिर्नाम जगती भवति । यथा—

लोकं पृण छिद्रं पृण (१) अथो सीद शिवा त्वम् (२) ।
इन्द्राग्नी त्वा बृहस्पतिः (३) अस्मिन् योनावसीषदन् (४)
तया देवतयाङ्गिरस्वद्ध्रुवा सीद (५) ।।
(यजुर्वेदे तै० ब्रा० ३।११।६।३) ।।५४।।

इति त्रिष्टुब्जगत्यधिकारः ।।

अथ गायत्र्यादीनां विशेषसंज्ञाधिकारः—

एकस्मिन् पञ्चके छन्दः शङ्कुमती॥ ५५॥

यदैकः पञ्चाक्षरः पादो भवति त्रयश्च षडक्षरास्तदा शङ्कुमती नाम गायत्री सम्पद्यते । यथा—

तिस्रो देवीर्बर्हि (१) रेदँ सदन्त्विडा (२)
सरस्वती भारती (३) मही गृणाना (४) ॥
(य० तैत्तिरीयसंहिता ४।१।८।६)

तृतीयपादे सप्ताक्षराणि सन्ति तत्र षडक्षरमयस्तृतीयः पादो वेदेऽनुसन्धेयः । छन्दोग्रहणे प्रकृते पुनश्छन्दोग्रहणं छन्दोमात्र-प्रतिपत्तये । तेन सर्वेषु छन्दःसु पञ्चाक्षरैकपादलक्षितः शङ्कुमती वर्तते । इतरथा ह्यनन्तरं सम्प्रत्ययः स्यात् ॥५५॥

षट्के ककुद्मती ॥५६॥

एकस्मिन् षडक्षरे पादेऽन्येषु यथालक्षणमुपात्तेषु छन्दोमात्रं ककुद्मती नाम वर्तते । अत्र दकारो "यरोऽनुनासिकेऽनुनासिको वा" (पा० ८।४।४५) इति छन्दसि पाक्षिकः । भाषायां तु यवादि-गणे निपातनात् ककुब्मती, ककुम्मतीति ॥५६॥

त्रिपादणिष्ठमध्या पिपीलिकमध्या ॥५७॥

यदाद्यन्तौ पादौ बह्वक्षरौ मध्यमोऽल्पतराक्षरस्तदाणिष्ठमध्या सती पिपीलिकमध्या नाम जायते । अयं भावः—आद्यन्तौ पादा-वष्टाक्षरौ मध्यमस्त्र्यक्षरः, एवं त्रिपाद्गायत्री पिपीलिकमध्या नाम्नी विद्यते । एवं चतुरक्षरे पञ्चाक्षरेऽपि मध्यमे पादे पिपीलिक-मध्या निष्पद्यते । यत्किञ्चित्त्रिपाच्छन्दो लघुमध्यमपादं तत्सर्वं

पिपीलिकमध्यमुच्यते। "पिपीलिकमध्येत्यौपमिकम्" (नि० ७।१३।३) इति यास्काचार्यः। उदाहरणं यथा—

नृभिर्येमानो हर्यतो (१) विचक्षणो (२)
राजा देवः समुद्रियः (३) ॥
(ऋ० ९।१०७।१६) ॥५७॥

## विपरीता यवमध्या ॥५८॥

आद्यन्तौ पादौ लघ्वक्षरौ मध्यमश्च बह्वक्षरः सा गायत्री यवमध्या नाम निगद्यते। एवमुष्णिगादिष्वपि नियोज्यम्। उदाहरणं यथा—

सुदेवः समहासति (१) सुवीरो नरो मरुतः स मर्त्यः (२)।
यं त्रायध्वे स्याम ते (३) ॥
(ऋ० ५।५३।१५) ॥५८॥

## ऊनाधिकेनैकेन निचृद्भुरिजौ ॥५९॥

चतुर्विंशत्यक्षरा गायत्र्येकेनाक्षरेण न्यूनेन सा निचृदिति विशेषसंज्ञां लभते। एकेनाधिकेन भुरिगिति संज्ञाम्। एवमुष्णिगादिष्वपि द्रष्टव्यम्। निचृद्गायत्र्या उदाहरणं यथा—

अग्निमिन्धानो मनसा (१) धियं सचेत मर्त्यः (२)।
अग्निमीधे विवस्वभिः (३)॥ (ऋ० ८।१०२।२२)

निचृदुष्णिगादीनामप्येवमेव प्रदेयानि निगमवचनानि। भुरिग्गायत्र्या उदाहरणं यथा—

परि द्युक्षः सनद्रयि (१) भरद्वाजं नो अन्धसा (२)।
सुवानो अर्ष पवित्र आ (३)॥ (ऋ० ९।५२।१)

भुरिगुष्णिगादीनामप्येवमेव प्रदेयानि निगमवचनानि ॥५९॥

## द्वाभ्यां विराट्स्वराजौ ॥६०॥

ऊनाधिकग्रहणमनुवर्तते। द्वाभ्यामक्षराभ्यां न्यूनाधिकाभ्यां

गायत्री यथाक्रमं विराट्-स्वराट्-संज्ञिका भवति । एवमुष्णि-गादिष्वपि द्रष्टव्यम् । विराड्गायत्र्या उदाहरणं यथा—

राजन्तमध्वराणां (१) गोपामृतस्य दीदिविम् (२) ।
वर्धमानं स्वे दमे (३) ॥ (ऋ० १।१।८)

स्वराड्गायत्र्या उदाहरणं यथा—

जोषा सवितर्यस्य ते (१) हरः शतं सवाँ अर्हति (२) ।
पाहि नो दिद्युतः पतन्त्याः (३) ॥
(ऋ० १०।१५८।२) ॥६०॥

आदितः सन्दिग्धे ॥६१॥

यदा षड्विंशत्यक्षरं छन्दो भवति तदा किं प्रतिपत्तव्यम्, किं गायत्रीस्वराट्, उतोष्णिग्विराड् इति ? एवं सन्दिग्धे सति छन्दस्यादिभूतात् पादान्निर्णयः करणीयः । यदि प्रथमः पादो गायत्र्यास्तदा गायत्र्येवासौ । अथोष्णिहस्तदोष्णिग् इति । एवं सर्वत्र विज्ञेयम् ॥६१॥

देवतादितश्च ॥६२॥

इदमपरं निर्णयनिमित्तमुदीर्यते । सन्दिग्धे छन्दसि देवता-देश्च निर्णयो विधेयः । आदिग्रहणं स्वरादिपरिग्रहार्थम् ॥६२॥

इति गायत्र्यादीनां विशेषसंज्ञाधिकारः ॥

---

कस्य छन्दसः का देवता यथा निर्णयः कर्त्तव्य इत्यपेक्षायामिदमुच्यते—

अग्निः सविता सोमो बृहस्पतिर्मित्रवरुणाविन्द्रो विश्वेदेवा देवताः ॥६३॥

गायत्र्यादीनां जगतीपर्यन्तानां यथाक्रममग्न्यादयो देवता विज्ञेयाः । तत्र सन्दिग्धे छन्दसि यदाग्नेयं तदा गायत्री । यदा सावित्रं तदोष्णिग् ज्ञेयम् । एवं सर्वत्र । वैदिकेष्वेव छन्दःसु

निचृद्भुरिजौ तथा विराट्स्वराजौ च विलोक्येते न लौकिकेषु । अतो लौकिकेषु सन्देहाभावात् तन्निर्णयभूता देवतादयो नाभिलष्यन्ते ॥६३॥

स्वराः षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाः ॥६४॥

इमे स्वरा गायत्र्यादिषु छन्दःसु क्रमेण विलोकनीयाः ॥६४॥

सितसारङ्गपिशङ्गकृष्णनीललोहितगौरा वर्णाः ॥६५॥

गायत्र्यादिषु छन्दःसु क्रमेण सितसारङ्गादयो वर्णा वर्णनिर्णयार्थमुदीर्यन्ते ॥६५॥

आग्निवेश्य-काश्यप-गौतमाङ्गिरस-भार्गव-कौशिक-वासिष्ठानि गोत्राणि ॥६६॥

गायत्र्यादीनां छन्दसां क्रमेण तानि गोत्राणि विज्ञायन्ताम् ॥६६॥

छन्दसां देवता-स्वर-वर्ण-ऋषि-ज्ञापकयन्त्रम्

| छन्दः | गायत्री | उष्णिक् | अनुष्टुप् | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|
| देवता | अग्निः | सविता | सोमः | बृहस्पतिः | वरुणः | इन्द्रः | विश्वेदेवाः |
| स्वरः | षड्जः | ऋषभः | गान्धारः | मध्यमः | पञ्चमः | धैवतः | निषादः |
| वर्णः | शुक्लः | कपिशः | पीतः | कृष्णः | नीलः | रक्तः | गौरः |
| ऋषिः | आग्निवेश्यः | काश्यपः | गौतमः | आङ्गिरसः | भार्गवः | कौशिकः | वासिष्ठः |

इति श्रीमन्मुनिमेधाव्रताचार्यरचितायां व्रतिमङ्गलायां छन्दःसूत्रवृत्तौ तृतीयोऽध्यायः ॥३।

# * अथ चतुर्थोऽध्यायः *

चतुःशतमुत्कृतिः ॥१॥

चतुरधिकं शतं चतुःशतम्, मध्यमपदलोपी समासः । अथवा चत्वारि च शतं च चतुःशतम्, द्वन्द्वसमासः । कर्मधारयस्तु नोपपद्यते तत्र चतुःशतानीति प्राप्नोति । यत्र चतुःशतमक्षराणां संख्या भवति तद् उत्कृतिर्नाम छन्दः । यथा—

छागस्य हविष आत्तामद्य (१) मध्यतो मेद उदभृत (२)
पुरा द्वेषोभ्यः (३) पुरा पौरुषेय्या गृभो (४) घस्तां
नूनं (५) घासे अज्राणां यवसप्रथमाना३ (६) सुमत्क्षराणां३
शतरुद्रियाणाम् (७) अग्निष्वात्तानां पीवोपवसनानां (८)
पार्श्वतः श्रोणितः (९) शितामतः उत्सादत (१०)
अङ्गादङ्गादवात्तानां (११) करत एवाश्विना (१२)
जुषेता३ हविः (१३) ॥ (यजु० २१।४३)

चतुरश्चतुरस्त्यजेदुत्कृतेः ॥२॥

चतुःशताक्षराच्छन्दसः क्रमेण चतुश्चतुरः संख्याविशेषान् परिहरेत । एतदुक्तं भवति—उत्कृतेरारभ्य चतुर्भिश्चतुर्भिरक्षरैर्न्यूनानि छन्दांस्यन्यानि स्थापयेद् अष्टाचत्वारिंशदक्षरपर्यन्तम् ।२।

तान्यभिसंव्याप्रेभ्यः कृतिः ॥३॥

तान्युत्कृतेरनन्तराणि छदांसि, अभि, सम्, आङ्, प्र इत्येतेभ्यः पराणि कृतिसंज्ञानि भवन्ति ।

तत्र शताक्षरं छन्दः-अभिकृतिः । यथा—

देवो अग्निः स्विष्टकृत् (१) देवान् यक्षद्यथायथम् (२)
होताराविन्द्रमश्विना (३) वाचा वाचँ सरस्वतीम् (४)
अग्निँ सोमँ स्विष्टकृत् (५) स्विष्ट इन्द्रः सुत्रामा (६)
सविता वरुणो भिषक् (७) इष्टो देवो वनस्पतिः (८)
स्विष्टा देवा आज्यपाः (९) इष्टो अग्निरग्निना (१०)
होता होत्रे स्विष्टकृत् (११) यशो न दधदिन्द्रियम् (१२)
ऊर्जमपचितिं स्वधाम् (१३) ॥

(तैत्तिरीयब्राह्मणे २।६।१४।११)

षण्णवत्यक्षरं संकृतिर्यथा—

देवो अग्निः स्विष्टकृत् (१) सुद्रविणा मन्द्रः कविः (२)
सत्यमन्मा यजी होता (३) होतुर्होतुरायजीयान् (४)
अग्ने यान् देवानयाट् (५) याँ अपि प्रेः (६) ये ते होत्रे
अमत्सत (७) ताँ ससनुषाँ होत्रां देवंगमां (८) दिवि
देवेषु यज्ञमेरयेमम् (९) स्विष्टकृच्चाग्ने होताभूः (१०)
वसुवने वसुधेयस्य नमो वाके वीहि (११) ॥

(तैत्तिरीयब्राह्मणे ३।६।१४।१)

द्वानवत्यक्षरं विकृतिर्यथा—

इमे सोमाः सुरामाणः (१) छागैर्न मेषैर्ऋषभैः सुताः (२)
शष्पैर्न तोक्मभिः (३) लाजैर्महस्वन्तः (४) मदा मासरेण
परिष्कृताः (५) शुक्राः पयस्वन्तोऽमृताः (६) प्रस्थिता वो
मधुश्चुतः (७) तानश्विना सरस्वती (८) न्द्रः सुत्रामा
वृत्रहा (९) जुषन्ताँ सौम्यं मधु (१०) पिबन्तु मदन्तु वियन्तु
सोमम् (११) ॥ (तैत्तिरीयब्राह्मणे २।६।११)

अष्टाशीत्यक्षरमाकृतिर्यथा—

तच्चक्षुर्देवहितं (१) पुरस्ताच्छुक्रमुच्चरत् (२) पश्येम शरदः शतं (३) जीवेम शरदः शतं (४) नन्दाम शरदः शतं (५) मोदाम शरदः शतं (६) भवाम शरदः शतं (७) शृणवाम शरदः शतं (८) प्रब्रवाम शरदः शत (९) मजीताः स्याम शरदः शतं (१०) ज्योक् च सूर्यं दृशे (११) ॥

(तैत्तिरीयारण्यके ४।४२।२२)

चतुरशीत्यक्षरं प्रकृतिर्यथा—

अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्य (१) पापेभ्यो रक्षन्ताम् (२) यदह्ना पापमकार्षम् (३) मनसा वाचा हस्ताभ्याम् (४) पद्भ्यामुदरेण शिश्ना (५) अहस्तदवलुम्पतु (६) यत्किं च दुरितं मयि (७) इदमहं माममृतयोनौ (८) सत्ये ज्योतिषि जुहोमि स्वाहा (९) ॥

(तै० आ० १०।२४) ॥३॥

प्रकृत्या चोपसर्गवर्जितः ॥४॥

उपसर्गेण वर्जितः शुद्धः कृतिशब्दः प्रकृत्या स्वरूपेणैवावतिष्ठते। तेनैतदुक्तं भवति–अशीत्यक्षरं छन्दः कृतिर्नाम। यथा—

देव इन्द्रो नराꣳशस (१) स्त्रिवरूथस्त्रिवन्धुरो (२) देवमिन्द्रमवर्धयत् (३) शतेन शितिपृष्ठानामाहितः (४) सहस्रेण प्रवर्तते (५) मित्रावरुणेदस्य होत्रमर्हतो (६) बृहस्पतिः स्तोत्र (७) मश्विनाध्वर्यवं (८) वसुवने वसुधेयस्य वेतु यज (९) ॥ (यजु० २८।१९) ॥४॥

धृत्यष्टिशक्वरीजगत्यः ॥५॥

कृतेरधस्ताद् धृतिः अष्टिः शक्वरी जगतीत्येते शब्दाः क्रमेण व्यवस्थापनीयाः ॥५॥

पृथक् पृथक् पूर्वत एतान्येवैषाम् ॥६॥

एषां धृत्यादीनां पूर्वतः पृथक् पृथगेतान्येव शब्दरूपाणि लिखेत्। पृथक् पृथग्ग्रहणं प्रत्येकं पूर्वत्वज्ञापनाय। अन्यथा हि समुदायपूर्वत्वमेषां स्यात्। तेनायं भावः—धृतिशब्दात् पूर्वं धृतिशब्दः, अष्टिशब्दात्पूर्वमष्टिशब्दः, शक्वरीशब्दात् पूर्वं शक्वरीशब्दः, जगतीशब्दात्पूर्वं जगतीशब्दः ॥६॥

द्वितीयं द्वितीयमतितः ॥७॥

अत्र द्वितीयं द्वितीयं शब्दरूपमतिशब्दात्परतः प्रयोजनीयम्। एवं सत्युत्तरेषां छन्दसामेताः संज्ञाः क्रमेण जायन्ते। तत्र षट्सप्तत्य-मतिधृतिर्यथा—

स हि शर्धो न मारुतं तुविष्वणि (१) रप्नस्वतीषूर्वरास्वि-ष्टनि (२) रार्तनास्विष्टनिः (३)। आदद्धव्यान्याददि (४) र्यज्ञस्य केतुरर्हणा (५) अध स्मास्य हर्षतो हृषीवतो (६) विश्वे जुषन्त पन्थां (७) नरः शुभेन पन्थाम् (८) ॥

(ऋ० १।१२७।६)

शप्तत्यक्षरं धृतिर्यथा—

अवर्मह इन्द्र दादृहि श्रुधी नः (१) शुशोच हि द्यौः क्षा न भीषाँ अद्रिवो (२) घृणान्न भीषाँ अद्रिवः (३ शुष्मिन्तमो हि शुष्मिभि (४) र्वधैरुग्रेभिरीयसे (५) अपूरुषघ्नो अप्रतीत शूर सत्वभि (६) स्त्रिसप्तैः शूरसत्वभिः (७) ॥

(ऋ० १।१३३।६)

अष्टषष्ट्यक्षरमत्यष्टिर्यथा—

अदर्शि गातुरुरवे वरीयसी (१) पन्था ऋतस्य समयंस्त रश्मिभि (२) श्चक्षुर्भगस्य रश्मिभिः (३) द्युक्षं मित्रस्य सादन (४) मर्यम्णो वरुणस्य च (५) अथादधाते बृहदुक्थ्यं वय (६) उपस्तुत्यं बृहद्वयः (७) ॥
(ऋ० १।१३६।२)

चतुःषष्ट्यक्षरमष्टिर्यथा—

त्रिकद्रुकेषु महिषो यवाशिरं (१) तुविशुष्मस्तृपत्सोमम-पिब (२) द्विष्णुना सुतं यथावशत् (३)। स ईं ममाद महि कर्म कर्तवे महामुरुं (४) सैनं सश्चद्देवो देवं (५) सत्यमिन्द्रं सत्य इन्दुः (६) ॥ (ऋ० २।२२।१)

षष्ट्यक्षरमतिशक्वरी यथा—

साकं जातः क्रतुना साकमोजसा ववक्षिथ (१) साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणिः (२)। दाता राधः स्तुवते काम्यं वसु (३) सैनं सश्चद्देवो देवं (४) सत्यमिन्द्रं सत्य इन्दुः (५) ॥ (ऋ० २।२२।३)

षट्पञ्चाशदक्षरा शक्वरी यथा—

प्रो ष्वस्मै पुरोरथ(१) मिन्द्राय शूषमर्चत(२)। अभीके चिदु लोककृत् (३) सङ्गे समत्सु वृत्रहा (४) ऽस्माकं बोधि चोदिता (५) नभन्तामन्यकेषां (६) ज्याका अधि धन्वसु (७) ॥ (ऋ० १०।१३३।१)

द्विपञ्चाशदक्षरमतिजगती यथा—

स भ्रातरं वरुणमग्न आ ववृत्स्व (१) देवाँ अच्छा

सुमती यज्ञवनसं (२) ज्येष्ठं यज्ञवनसम् (३) ऋतावान-
मादित्यं चर्षणीधृतम् (४) राजानं चर्षणीधृतम् (५) ॥
(ऋ०।४।१।२)

अष्टाचत्वारिंशदक्षरा जगती यथा—

इन्द्रं मित्रं वरुणमग्निमूतये(१)मारुतं शर्धो अदितिं हवामहे(२)
रथं न दुर्गाद्वसवः सुदानवो(३)विश्वस्मान्नो अंहसो निष्पिपर्तन(४)
(ऋ० १।१०६।१)

## अथोत्कृत्यादिच्छन्दसामक्षरसंख्याबोधिका पंक्तिः

| छन्दःसंख्या | छन्दोनाम | अक्षरसंख्या | छन्दःसंख्या | छन्दोनाम | अक्षरसंख्या |
|---|---|---|---|---|---|
| १ | उत्कृतिः | १०४ | ९ | धृतिः | ७२ |
| २ | अभिकृतिः | १०० | १० | अत्यष्टिः | ६८ |
| ३ | संकृतिः | ९६ | ११ | अष्टिः | ६४ |
| ४ | विकृतिः | ९२ | १२ | अतिशक्करी | ६० |
| ५ | आकृतिः | ८८ | १३ | शक्करी | ५६ |
| ६ | प्रकृतिः | ८४ | १४ | अतिजगती | ५२ |
| ७ | कृतिः | ८० | १५ | जगती | ४८ |
| ८ | अतिधृतिः | ७६ | | | |

॥ इति वैदिकं प्रकरणम् ॥

# अथ लौकिकं प्रकरणमारभ्यते—

अत्र लौकिकम् ॥८॥

अधिकारोऽयमाशास्त्रावसानात्। पूर्वेषां छन्दसां वैदिकत्वमेव। इतः प्रभृत्यार्यादीनां चूलिकापर्यन्तानां लौकिकत्वमेव। "ग्लिति समानी" (पि० ५।६) इति समान्यादीनामुत्कृतिपर्यन्तानां वैदिकत्वं लौकिकत्वञ्च ज्ञेयम्। अत्र वैदिकच्छन्दसां प्रस्तावे प्रसाङ्गाद्वेदवदनादिमुनिपारम्पर्यागतं स्मृतिपुराणेतिहासादिषु दृश्यमानमार्यादिदण्डकपर्यन्तं लौकिकच्छन्दोजातमधिक्रियते, तन्मूलत्वात्काव्यस्य। काव्यं च कीर्तिरूपत्वादानन्दहेतुत्वाच्च पुरुषार्थः ॥८॥

आत्रैष्टुभाच्च यदार्षम् ॥९॥

अत्राङभिविधौ न मर्यादायाम्। त्रिष्टुबेव त्रैष्टुभं स्वार्थे तद्धितः। गायत्र्यादित्रिष्टुप्पर्यन्तं यदार्षं छन्दोजातं वैदिके प्रकरणे व्याख्यातं लौकिके च तत्तथैव द्रष्टव्यम्। किं तदार्षम्? चतुर्विंशत्यक्षरा गायत्री, अष्टाविंशत्यक्षरोष्णिक्, द्वात्रिंशदक्षरा-अनुष्टुप्, षट्त्रिंशदक्षरा बृहती, चत्वारिंशदक्षरा पङ्क्तिः, चतुश्चत्वारिंशदक्षरा त्रिष्टुप्। सूत्रे चकारः समुच्चये ॥९॥

पादश्चतुर्भागः ॥१०॥

चतुर्भागश्चतुर्विंशत्यक्षराया गायत्र्याश्चतुर्थो भागः पादसंज्ञां लभते। गायत्र्याः षडक्षरः पादः। एवमुष्णिगादिष्वपि द्रष्टव्यम्। समवृत्तविषयमेतत्। इदं लक्षणं क्वचित्कचिद् भवति। आर्यासु

अर्धसमविषमेषु च न्यूनाधिकाक्षराणि दृश्यन्ते। विपुलाचूलिकादिषु विपुलायां यतिमात्रं निषिध्यते त्रिषु गणेषु ॥१०॥

यथावृत्तसमाप्तिर्वा ॥११॥

यस्य वृत्तस्य यादृशैः पादैर्न्यूनाक्षरैरधिकाक्षरैर्वा समाप्तिरालोक्यते तस्य तादृशा एव पादा आदातव्याः। वाशब्दो व्यवस्थितविभाषां द्योतयति। उद्‌गतादिषु विषमवृत्तेषु चतुर्भागातिक्रमेणापि पादव्यवस्थादर्शनात्।

आदौ तावद् गणच्छन्दो मात्राच्छन्दस्ततः परम्।
तृतीयमक्षरच्छन्दश्छन्दस्त्रेधा तु लौकिकम् ॥१॥
आर्याद्युद्‌गीतिपर्यन्तं गणच्छन्दः समीरितम्।
वैताल्यादिचूलिकान्तं मात्राच्छन्दः प्रकीर्तितम् ॥२॥
समान्याद्युत्कृतिं यावदक्षरच्छन्द एव च ॥३॥
—इति हलायुधः ॥११॥

अथार्याधिकारः—

तत्रादौ तावदार्यालक्षणसिद्ध्यर्थं गणसंज्ञां करोति-

लः समुद्रा गणः ॥१२॥

ल इत्येकमात्रिकस्याक्षरस्य ग्रहणम्। समुद्रा इति चतुःसंख्योपलक्षणार्थम्। चतुर्णां लकाराणां गण इत्येषा संज्ञा विधीयते ॥१२॥

गौ गन्तमध्यादिर्लश्च ॥१३॥

अमुना सूत्रेण गणस्य विन्यासभेदं दर्शयति। स हि गणः

कदाचिद् गुरुद्वयेन ( SS ) भवति, कदाचिदन्तेनैकेन गुरुणा (।।S), कदाचिन्मध्यमेन गुरुणा (।S।), कदाचिदाद्येन गुरुणा (S।।), कदाचिच्चतुर्भिर्लघुभिः (।।।।)। षष्ठो भेदो नेष्यते। अन्तमध्यादिरिति प्रथमं द्वन्द्वसमासं कृत्वा पश्चाद्गकारेण बहुव्रीहिः। द्वन्द्वात् परो यः श्रूयते लभतेऽसौ प्रत्येकाभिसम्बन्धम्। द्वौ गकारौ चत्वारो लघवो भवन्ति, स एको (SS) गणः। गकारोऽन्ते यस्य स गन्तो द्वितीयो (।।S) गणः। गकारो मध्ये यस्य स गमध्यस्तृतीयो (।S।) गणः। गकार आदौ यस्यासौ गादिश्चतुर्थो (S।।) गणः। नकारलकारौ मिलितौ चत्वारो लघवो भवन्ति स पञ्चमो (।।।।) गणः ॥१३॥

एवं गणेषु सिद्धेष्विदानीमार्यालक्षणं करोति—

स्वरा अर्धं चार्यार्द्धम् ॥१४॥

गणग्रहणमनुवर्तनीयम्। स्वरा इति सप्तानां संज्ञा बोध्या। यत्र प्रस्तारे गणाः सप्त भवन्ति, अर्धं च गणस्य तदार्यार्द्धं निष्पद्यते। द्वितीयमप्यर्धं तादृशमेव। समप्रविभागेऽर्धशब्दः। अत्रार्धस्य लक्षणं कुर्वाण एवं ज्ञापयत्याचार्यो यदार्यायामवान्तरपादव्यवस्था नास्ति। उदाहरणं यथा—

१ २ ३ ४ ५ ६ ७

S S S S S । । S S । । । । । S । S S S

द्वीपा—दन्य—स्मादपि मध्या—दपि जल—निधेर्दि-शोऽप्य-न्तात्।

१ २ ३ ४ ५ ६ ७

S S । । । । । । । । । । । । । । । । । । S S S

आनी-य झटिति घटयति विधिरभि- मतमभि—मु—-खीभू—तः।

(रत्नावली अ० १ श्लो० ६)॥१४॥

## अत्रायुङ् न ज् ॥१५॥

अत्रार्याच्छन्दसि अयुग्गणः=प्रथमस्तृतीयः पञ्चमः सप्तमश्च न जगणो=मध्यगुरुर्न कर्त्तव्यः, शेषास्तु कामतो भवन्ति ॥१५॥

## षष्ठो ज् ॥१६॥

अत्रार्याच्छन्दसि षष्ठो जगणो=मध्यगुरुरेव भवति। उदाहरण यथा—

१ २ ३ ४ ५ ६ ७

S I I I I S S S S S I I S I S I I I I I S

सा जय—ति जग-त्यार्या देवी—निगमा—न्त-तत्त्व—विदतित—राम् ।

१ २ ३ ४ ५ ६ ७

S S I S I I I S S I I S S I S I I S

या जा-यते—गु—रुकुले शिक्षण-दीक्षो-ज्ज्वला व्र— ति—नी ॥१६॥

## न्लौ वा ॥१७॥

षष्ठ इत्यनुवर्तनीयम्। आर्यायाः षष्ठो गणः सर्वलघुर्वा भवति। उदाहरणं यथा—

१ २ ३ ४ ५ ६ ७

S S I S I S S S S S S I I I I I I I I S

गुर्वा—लये व—सन्तीं तामे—-व स्तौ-मि विहित-यमनिय—माम् ।

१ २ ३ ४ ५ ६ ७

S S S I I S I I S I I I I S I S S S

ब्रह्म —ध्यानर—सादिव मोदज—लधिम—ग्न—चित्ता या ॥१७॥

न्लौ चेत्पदं द्वितीयादि ॥१८॥

षष्ठो गणः सर्वलघुश्चेद् भवति तदा द्वितीयाक्षरादारभ्य पदं प्रवर्तते। पूर्वमेवोदाहरणम् ॥१८॥

सप्तमः प्रथमादि ॥१९॥

षष्ठे गणे मध्यगुरौ (।ऽ।) सर्वलघौ (।।।) वा जाते सप्तमो गणः (।।।।) सर्वलघुश्चेद् भवति तदा प्रथमाक्षरादारभ्य पदं प्रवर्तते। उदाहरणं यथा—

१ २ ३ ४ ५ ६ ७
ऽ ऽ ऽ । । ऽ ऽ । ऽ । ऽ ऽ । ऽ । । । । । ऽ
ब्रह्मा—नन्दनि—लीनो विनम्र—राजे—न्द्रवृन्द—नुतचर—णः।

१ २ ३ ४ ५ ६ ७
। । । । । ऽ । ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । । ऽ
निगमव—चनानु—रागी धन्यो योगी* चिरञ्ज—य—ति ॥

अन्यच्च—

१ २ ३ ४ ५ ६ ७
। । । । । ऽ । ऽ ऽ ऽ ऽ । । । । । । । । । ।। । ऽ
जयति भु—वनैक—धीरः काशी—बुधविज—यसुमति—बलविभ—वः।

१ २ ३ ४ ५ ६ ७
। । । । । ऽ । । । । । ऽ । । ऽ ऽ । ऽ ऽ ऽ
निगमत—तबोध—वितरण—निर्जित—काशी—श्व—रो वा—ग्मी+ ॥१९॥

---

*स्वामी दयानन्दसरस्वतीत्यर्थः +वाग्मी दयानन्दस्वामी।

### अन्त्ये पञ्चमः ॥२०॥

अन्ते भवमन्त्यम्, दिगादित्वाद्यत्। अन्त्ये द्वितीयार्धे पञ्चमश्चेद् गणः सर्वलघुर्भवति तदा प्रथमादि पदं प्रवर्तते। उदाहरणं यथा—

१ २ ३ ४ ५ ६ ७
। ।।। ऽ।। ऽऽ ऽ।। ऽऽ ।ऽ। ऽऽ ऽ
स जयति वर्णिव—रेण्यः पुण्यध—राया यति—र्द—यान—न्दः।
१ २ ३ ४ ५ ६ ७
ऽऽ ।ऽ। ऽ।। ऽऽ ।।।। । ऽ। । ऽ
प्रत्य—थिराज—पण्डित—तेजो—बलहर—ण—पूर्ण—क—लः ॥२०॥

### षष्ठश्च ल् ॥२१॥

अन्त्ये इति पदमनुकर्षणीयम्। अन्त्ये द्वितीयेऽर्धे मध्यगुरौ सर्वलघौ वा षष्ठे गणे प्राप्ते तदपवादो लकारो विधीयते। पूर्वमेवोदाहरणम् ॥२१॥

### त्रिषु गणेषु पादः पथ्याद्ये च ॥२२॥

चकारोऽन्त्य इति पदानुकर्षणार्थः। यस्या आर्याया अन्त्येऽर्धे आद्ये च त्रिषु गणेषु पादः समाप्यते साऽऽर्या पथ्या नाम भवति। उदाहरणं यथा—

१ २ ३ ४ ५ ६ ७

S S  S S  S S  S | |  S S | S  |  S S  S

रम्यं दीर्घं क्षौमं, काञ्चन—मुद्राद्वयं म——हाभा—र्घ्यम् ।

१ २ ३ ४ ५ ६ ७

| | | |  S | |  S S  S | |  S S  |  S S  S

गुरुचर—णान्तिक—मेष, प्रेषित —वाञ्छ्—द्ध—या शि-ष्य: ॥२२॥

(दयानन्ददिग्विजयमहाकाव्ये १२।१४१)

## विपुलान्या ॥२३॥

यस्या आर्याया अन्त्येऽर्धे आद्ये वोभयोर्वा त्रिषु गणेषु पादो न विश्राम्यति साऽऽर्या विपुला नाम। सा चाद्यन्तोभयपूर्वकत्वात्त्रिधा भवति। सामान्येन विधानमेतत्। उदाहरणं यथा—

१ २ ३ ४ ५ ६ ७

S S  S S  S S  | S |  S S  | | | |  S  S  S

श्रीकै—लास—स्वामी, त्यजन्त—मित्थं सकलमि—मं प्रो—चे ।

१ २ ३ ४ ५ ६ ७

| | | |  S S  S S  | | S  S S  |  S S  S

किमिव वि—धातुं स्वामिन्, भवताऽऽरब्धं त—दाश्च—र्यम् ॥

(दयानन्ददिग्विजयमहाकाव्ये १२।१४२)

अथ च—

१ २ ३ ४ ५ ६ ७

S S  S S  S S  | S |  S  S  |  S  |  S | |  S

शौर्यो—दार्ये लाव—ण्यमत्य—लं—य—स्य विस्म—य प्रक-रम् ।

१ २ ३ ४ ५ ६ ७

I I S  I I S  I I S  I S I  S S  I S I  S I I  S

समभू—दखिला—यंमहा—शयोत्त—मानां स कोऽप्य—लं जय—तात् ॥

—इति कविवराखिलानन्दः ॥२३॥

## चपला द्वितीयचतुर्थौ गमध्ये जौ ॥२४॥

अधिकारोऽयम् । द्वितीयचतुर्थौ गणौ मध्यगुरू भवतः, प्रथमश्चान्तगुरुः, तृतीयो द्विगुरुः, पञ्चमश्चादिगुरुः, शेषं यथाप्राप्तम् । एवं गकारयोर्मध्ये द्वितीयचतुर्थौ जकारौ भवतः साऽऽर्या चपला नाम । उदाहरणं यथा—

१ २ ३ ४ ५ ६ ७

I I S  I S I  S S  I S  I S  S I S I  S I I  S

चपला न चेत्क—दा चि—न्तृणां भवेद् वृ—त्तिरुत्त—मा मन—सः ।

१ २ ३ ४ ५ ६ ७

S S  I S I  S  S  I S  I  S S  I  S S  S

धर्मा—र्थकाम—मो—क्षा—स्तदा क—रस्था न सन्दे—हः ॥२४॥

## पूर्वे मुखपूर्वा ॥२५॥

पूर्वेऽर्धे चपलालक्षणं चेद् भवेत् तदासौ मुखचपला आर्या जायेत । उदाहरणं यथा—

१ २ ३ ४ ५ ६ ७

I I S  I S  I  S S  I S I  S S  I S I  S I I  S

अति दा—रुणा द्वि—जिह्वा परस्य मर्मा—नुसारि—णी कुटि—ला ।

१ २ ३ ४ ५ ६ ७
ऽ ऽ ।।।। ऽ ऽ ऽ ऽ ऽ ऽ । ।।। । ऽ
दूराद् परिहर—णीया नारी नागी—व मुखच—प—ला ॥

आदिविपुलापूर्वकं मुखचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽ ऽ । ऽ। ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ
यस्या—श्च लोच—ने पि—ङ्गले भ्रु—वौ सं—गते मु-खं दी-र्घम् ।
१ २ ३ ४ ५ ६ ७
।।ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ ।। । ।।। । ऽ
विपुलो-न्नताश्च दन्ताः कान्ता—पौ भव—ति मुखच—प—ला ॥

अन्त्यविपुलापूर्वकं मुखचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७
।।ऽ । ऽ। ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ
विपुला—भिजात-वंशोद्-भवापि, रूपा—तिरेक—रम्या-पि ।
१ २ ३ ४ ५ ६ ७
ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ।। । ।।।। ऽ
निर्वा—स्यते गृ—हाद् व—ल्लभापि चेद् भव—ति मुखचप—ला ॥
—इति महाकविहलायुधः ।

## जघनपूर्वतरत्र ॥२६॥

द्वितीयेऽर्धे चपलालक्षणं चेद् भवति साऽऽर्या जघनचपला नाम । उदाहरणं प्रागेवोक्तम् ॥२६॥

## उभयोर्महाचपला ॥२७॥

यस्या उभयोरर्धयोश्चपलालक्षणं भवति साऽऽर्या महाचपला नाम। उदाहरणं यथा—

१ २ ३ ४ ५ ६ ७
। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ
विशदं विपक्षि-नृणां प्रतीप—मिच्छा—मि वक्तु—मार्ष—ज्ञः ।
१ २ ३ ४ ५ ६ ७
ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । । ऽ
सद् दुः—शकं नि—जापे—क्षिताक्ष—यो नु—र्न याव-द-ये ! ॥२७॥
(दयानन्ददिग्विजयमहाकाव्ये १२।१४३)

## आद्यर्धसमा गीतिः ॥२८॥

आद्यर्धेन सममन्त्यमर्धं यस्या साद्यर्धसमा गीतिर्नाम। अन्त्यपदलोपी समासः। एतदुक्तं भवति- द्वितीयेऽप्यर्धे षष्ठो गणो जकारो न्लौ वा कर्त्तव्यः। उदाहरणं यथा-

१ २ ३ ४ ५ ६ ७
। । ऽ । । । । । ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ ऽ ऽ
कठिनं गुरुकुल-गमनं वेदा—ध्ययनं जितेन्द्रि—यत्वं—च ।
१ २ ३ ४ ५ ६ ७
। । ऽ । । । । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ । । ऽ
प्रथमे वयसि नि—तान्तं निषेव्य—ते यै—स्त एव सत्पुरु—षाः ॥
—कविवराखिलानन्दः ।

पथ्यागीतिः—

१ २ ३ ४ ५ ६ ७
। । ऽ ऽ ऽ । । ऽ ऽ । । । । ऽ । ऽ । ऽ ऽ ऽ
अथ यो—गीन्द्रो ललित भस्मध—वलितं विधाय देहं स्वम् ।

१ २ ३ ४ ५ ६ ७
ऽ ऽ ऽ । । ऽ ऽ ऽ ऽ । । ऽ । ऽ । ऽ । । ऽ
कोपी—नं स व—सान—स्तस्थौ स्वगिरं नियम्य पर्णगृ—हे ॥२८॥
(दयानन्ददिग्विजयमहाकाव्ये १२।१४४)

## अन्त्येनोपगीतिः ॥२९॥

समा इत्यनुवर्तते। अन्त्येनार्धेन सममाद्यमर्धं यस्याः साऽऽर्या उपगीतिर्नाम। उदाहरणं यथा—

१ २ ३ ४ ५ ३ ७
ऽ ऽ ऽ । । ऽ । । ऽ ऽ ऽ ऽ । ऽ । । ऽ
गर्जन् यो मठ—नायक—साधू—नत्रा—सयद् वि--ज--यी ।

। । । । ऽ । । ऽ । । । । ऽ ऽ ऽ । ऽ ऽ ऽ
स मुनिह—रिः खलु सम्प्रति यतिलो—काल—स्य—तो मौनी ॥२९॥
(दयानन्ददिग्विजयमहाकाव्ये १२।१४५)

## उत्क्रमेणोद्गीतिः ॥३०॥

पूर्वोदितात्क्रमाद् विपरीतः क्रम उत्क्रमः। अयं भावः-

आद्यमन्त्यं भवति, एवंमन्त्यमादौ सा उद्गीतिर्नामाऽऽर्या। उदाहरणं यथा—

१ २ ३ ४ ५ ६ ८

S I I S S I I S I I S S S I S I I S

संस्कृत–वाचो–पदिशन् सुकृती धर्म– प्रचारमनाः ।

१ २ ३ ४ ५ ६ ७

S I I I I S S I I S S S S I S I S S S

जह्नुत–नुभवा–रोधसि मन्त्रोद्–गीति—श्चचार मुक्तात्मा ॥३०॥

(दयानन्ददिग्विजयमहाकाव्ये १२।१४८)

## अर्धे वसुगण आर्यागीतिः ॥३१॥

अष्टगणाः प्रथमेऽर्धे यस्या भवन्ति साऽऽर्यागीतिर्नाम आर्या। अष्टमोऽपि गणश्चतुर्मात्रिको भवतीति भावः। विशेषाभावाद् द्वितीयमप्यर्धं तादृशमेव। अत्रापि षष्ठो गणो द्विविकल्प एव न लकारः। अर्ध इति वर्तमाने पुनरर्धग्रहणाद् गणग्रहणाच्चेयमपि पथ्यादिलक्षणपूर्वकत्वात् तद्वदार्यागीतिः। उदाहरणं यथा—

१ २ ३ ४ ५ ६ ७ ८

I I I I I I I I S S S S S S I S I S S I I S

अजमज–रममर–मीशं स्वान्ते संध्या–यतां हि पुण्या–त्मनृणाम् ।

१ २ ३ ४ ५ ६ ७ ८

S S S S I I S I I S S S I S I S S S S S

मुक्ति–स्ताप–त्रयतो जनुषां सा स्या–दितीय–मार्या–गीतिः ॥

(दयानन्ददिग्विजयमहाकाव्ये १२।१४९)

पथ्या जघनचपला-आर्यागीतिः। तदुदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८

ऽ ऽ । ऽ । ऽ ऽ । । ऽ ऽ ऽ । । । । । । ऽ । । ऽ

मौना—हृतं वि-शिष्टं निगमा-द्येना-विगतमि—ति कथं स यमी।

१ २ ३ ४ ५ ६ ७ ८

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । ऽ

प्राक—र्ण्यं वेद—निन्दां भजेन्नु मौनं निनिन्द तद् भा-गवतम्॥

दयानन्ददिग्विजयमहाकाव्ये १२।१३१

अन्यच्च—

१ २ ३ ४ ५ ६ ७ ८

ऽ ऽ । ऽ । ऽ ऽ । । ऽ ऽ ऽ । । । । । । ऽ । । ऽ

वाता—हतोर्मि-माला-चपलं सम्प्रे—क्ष्य विषय-सुखम-ल्पतरम्।

१ २ ३ ४ ५ ६ ७ ८

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । ऽ

मुक्त्वा समस्त—सङ्गं तपोव—नान्या—श्रयन्ति तेना—त्मविदः॥

—महाकवेर्हलायुधस्य।३१॥

इत्यार्याधिकारः।

———

अथ वैतालीयाधिकारः—

वैतालीयं द्विःस्वरा अयुक्पादे युग्वसवोऽन्ते ल्र्गः ।।३२।।

'लः समुद्रा गणः (पि० ४।१२) इत्यनुवर्तते । यत्रायुक्पादे=प्रथमे तृतीये च द्विस्वराः=चतुर्दशलकारा भवन्ति युक्पादे च=द्वितीये चतुर्थे च युग्वसवः=षोडशलकारास्तद् वैतालीयं नाम छन्दः। तेषां लां मध्य उभयोरपि पादयोरन्ते रेफलकारगकारा करणीयाः। उदाहरणानि यथा—

रगणः　　　　रगणः ल. गु.
१ २ ४ ५ ६ ८ ९ ११ १२ १४　१ २ ४ ६ ७ ८　१०१११३ १४ १६
I I S I I S I S I S　I I S S I I　S I S I S
जगदेकहितैकनिश्चया　निजधर्मैकप—रप्रयो–ज–नाः ।

रगणः ल. गु.　　　　रगणः ल. गु.
१ २ ४ ५ ६ ८ ९ ११ १२ १४　१ २ ४　६ ७ ८ १० ११ १३ १४ १६
I I S I I S I S I S　I I S　S I I S I S I S
जगतीतलमात्रमण्डले　विरला एव भवन्ति ते जनाः ।।

इति कविवराखिलानन्दः ।

अन्यच्च—

रगणः ल. गु.　　　　रगणः ल. गु.
२ ४ ५ ६ ८ ९ ११ १२ १४　२ ४ ६ ७ ८ १० ११ १३ १४ १६
S S I I S I S I S　S S S I I S I S I S
अन्नालभनादकालतः — संहृष्टाखिलकल्यजालकाः ।

रगणः ल. गु.　　　　रगणः ल. गु.
२ ४　५ ६ ८ ९ ११ १२ १४　२ ४ ६ ७ ८ १० ११ १३ १४ १६
S S　I I S I S I S　S S S I I S I S I S
बालाः　सुकठोरकुन्तला—वैतालीयवपुर्व्यडम्बयन् ।।

(दयानन्ददिग्विजयमहाकाव्ये १२।१२९)

अथ च—

रगणः ल. गु. रगणः ल. गु.

१ २ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६
I I S I I S I S I S I I S S I I S I S I S

शुचिसंयमतीर्थशालिनीमृतनीरां करुणातरङ्गिणीम् ।

रगणः ल. गु. रगणः ल. गु.

१ २ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६
I I S I I S I S I S I I S S I I S I S I S

स तु शीलतटात्मनिम्नगा—मभिषेकाय विवेश संयमी ॥

(दयानन्ददिग्विजयमहाकाव्ये ५।६७)

रगणः ल. गु. रगणः ल. गु.

१ २ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६
I I S I I S I S I S I I S S I I S I S I S

जठरानलशामनाय ये कृशकायाः परधर्मिणां नृणाम् ।

रगणः ल. गु. रगणः ल. गु.

१ २ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६
I I S I I S I S I S I I S S I I S I S I S

विनिपत्य करोग्रपञ्जरे समभूवञ्छ्रुति — धर्मवैरिणः ॥

(दयानन्ददिग्विजयमहाकाव्ये १२।१३०)

## गोपच्छन्दसकम् ॥३३॥

अस्मिन् वैतालीये छन्दस्यन्ते गकारश्चेदधिको भवति तद्

औपच्छन्दसकं नाम छन्दः। उदाहरणानि यथा—

रगणः यगणः रगणः यगणः

१ २ ४ ५ ६ ८ ९ ११ १२ १४ १६ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६ १८

I I S I I S I S I S S I I S S I I S I S I S S

परवञ्चनकर्मणि प्रवीणं—यतिवृन्दं गृहमेधितोऽपि दुष्टम्।

रगणः यगणः रगणः यगणः

२ ४ ५ ६ ८ ९ ११ १२ १४ १६ २ ४ ६ ७ ८ १० ११ १३ १४ १६ १८

I I S I I S I S I S S S S S I I S I S I S S

निजधर्मपराङ्मुखं तदानी—मौपच्छन्दसकं ददर्श देवः॥

अन्यच्च—

रगणः यगणः रगणः यगणः

४ ५ ६ ८ ९ ११ १२ १४ १६ २ ६ ७ ८ १० ११ १३ १४ १६ १८

S S I I S I S S S S S S S I I S I S I S S

धर्म्यैर्वचनैर्विमोह्य मग्धान्—यच्छिष्यान् सुकृताभिलाषिवैश्यान्।

रगणः यगणः रगणः यगणः

२ ४ ५ ६ ८ ९ ११ १२ १४ १६ २ ४ ६ ७ ८ १० ११ १३ १४ १६ १८

S S I I S I S I S S S S S I I S I S I S S

लक्ष्मीं परिगृह्य धर्मदम्भा-दौपच्छन्दसकं ततान वृत्तम्॥

अथ च—

रगणः यगणः रगणः यगणः

१ २ ३ ४ ५ ६ ८ ९ ११ १२ १४ १६ २ ४ ६ ७ ८ १० ११ १३ १४ १६ १८

I I I I I I S I S I S S S S S I I S I S I S S

प्रथममितरकामिनीं स्वशिष्यां कृत्वा तत्पतिभावमाश्रयेत् तत्।

रगण; यगणः रगणः यगणः

१ २ ३ ४ ५ ६ ८ ९ ११ १२१४ १६ २ ४ ६ ७ ८१० १११३१४१६ १८

I I I I I I S I S I S S S S S I I S I S I S S

विषयनिरतमुण्डिमण्डलं चे—दौपच्छन्दसकं जगद्धतं हा ! ॥३३॥

(दयानन्ददिग्विजयमहाकाव्ये १२-११६।११७।११८)

## आपातलिका भ्गौ ग् ॥३४॥

रेफलकारगकाराणामपवादः। 'द्विःस्वरा अयुक्पादे युग्-वसवोऽन्ते' (पि० ४।३२) इत्यनुवर्तते। पूर्वलक्षणयोरन्ते भकारो गकारौ च भवतस्तद् वैतालीयम्—आपातलिकाऽऽख्यायते। उदाहरणं यथा—

भगणः ल.गु. भगणः ल.गु.

१ २ ३ ४ ६ ८ ९ १०१२ १४ १ २ ४ ६ ७ ८१० १११२१४१६

I I I I S S I I S S I I S S I I S I I S S

गुरुकुल—सेवी गुणरागी-गुरुभक्तो नियमोचितवृत्तः।

भगणः गु. गु. भगणः गु. गु.

१ २ ३ ४ ६ ८ ९१०१२ १४ १ २ ४ ६ ७ ८ १० ११ १२१४ १६

I I I I S S I I S S I I S S I I S I I S S

सकलहितैषी मितवादी—यदि लोकः किमलभ्यमिह स्यात् ॥

—इति कविवराखिलानन्दः ॥३४॥

## शेषे परेण युङ् न साकम् ॥३५॥

अत्र वैतालीयाधिकारे येषां लकाराणां नियम उक्तस्तद्-

व्यतिरिक्तो लकारवर्णः शेषस्तस्मिन् नियमः क्रियते—युग्लकारः परेण साकं न मेलनीयः। द्वितीयस्तृतीयेन, चतुर्थः पञ्चमेन युक्पादे षष्ठश्च सप्तमेन। एवं वदता शेषाणां मेलनमप्यनुज्ञातम्। अत्रोदाहरणं पूर्वमेव ॥३५॥

## षट् चामिश्रा युजि ॥३६॥

अत्र द्वितीयचतुर्थयोः पादयोः षड् लकारा अमिश्रा न कर्त्तव्याः, मेलनीया इत्यर्थः। प्रथमतृतीयपादयोश्च स्वरुचिः। तत्रोदाहरणं वैतालीये तावत्—

रगण: यगण: रगण. यगण.

१ २ ३ ४ ५ ६ ८ ९ ११ १२ १४ १६ २ ४ ६ ७ ८ १० ११ १३ १४ १६ १८

I I I I I I S I S I S S S S S I I S I S I S S

प्रथममितरकामिनीं स्वशिष्यां कृत्वा तत्पतिभावमाश्रयेत् तत्।

रगण; यगण: रगण: यगण:

१ २ ३ ४ ५ ६ ८ ९ ११ १२ १४ १६ २ ४ ६ ७ ८ १० ११ १३ १४ १६ १८

I I I I I I S I S I S S S S S I I S I S I S S

विषयनिरतमुण्डिमण्डलं चे—दौपच्छन्दसकं जगद्धतं हा! ॥३३॥

(दयानन्ददिग्विजयमहाकाव्ये १२।११८)

आपातलिकोदाहरणम्—

भगण: गु.गु. भगण: गु.गु.

१ २ ३ ४ ५ ६ ८ ९ १० १२ १४ २ ३ ४ ६ ७ ८ १० ११ १२ १४ १६

I I I I I S I I S S S I I S I I S I I S S

अभिरमयति काव्यकलेयं काव्यकलारसिकामलचित्तम्।

भगणः गु.गु. भगणः गु.गु.

१ २ ३ ४ ५ ६ ८ ९ १० १२ १४ १ २ ३ ४ ६ ७ ८ १० ११ १२ १४ १६

I I I I I S I I S S S I I S I I S S

नवनवरसपद्यसु-भङ्गाः प्रभुरससोदरमोदतरङ्गाः ॥३६॥

पञ्चमेन पूर्वः साकं प्राच्यवृत्तिः ॥३७॥

इदानीं विशेषलक्षणमाह। 'शेषे परेण युङ् न साकम्' (पि० ४।३५) इत्यत्र पञ्चमचतुर्थयोरेकीभावो निषिद्धः सोऽनेन विधीयते। 'युजि' इति पदमनुवर्तते। यदा युक्पादे पञ्चमेन लकारेण पूर्वः सङ्गच्छते तदा प्राच्यवृत्तिर्नाम वैतालीयं भवति। शेषं यथाप्राप्तम्। तत्रोदाहरणम्—

रगणः ल.गु. रगणः ल.गु.

१ २ ४ ५ ६ ८ ९ ११ १२ १४ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६

I I S I I S I S S I S I I I S I S I S

विपुलार्थसुवाचकाक्षराः कस्य नाम न हरन्ति मानसम्।

रगणः ल. गु. रगणः ल.गु.

१ २ ४ ५ ६ ८ ९ ११ १२ १४ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६

I I I I S I S I S S I S I I I S I S I S

रसभावविशेषपेशलाः प्राच्यवृत्तिकविकाव्यसम्पदः ॥

—इति महाकवेर्हलायुधस्य ॥३७॥

अयुक्तृतीयेनोदीच्यवृत्तिः ॥३८॥

'पूर्वः साकम्' इत्यनुवर्तते। अयुक्पादे तृतीयेन लकारेण

यदि पूर्वः सङ्गच्छते तदा उदीच्यवृत्तिर्नाम वैतालीयम्। शेषं यथाप्राप्तमेव। उदाहरणं यथा—

रगणः ल. गु. रगणः ल. गु.

१ ३ ४ ५ ६ ८ ९ ११ १२१४ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६
I S I I I S I S I S I I S S I I S I S I S

अवाचकमनूर्जिताक्षरं श्रुतिदुष्टं यतिकष्टमक्रमम्।

रगणः ल. गु. रगणः ल. गु.

१ ३ ४ ५ ६ ८ ९ ११ १२ १४ १ २ ४ ६ ७ ८ १० ११ १३ १४ १६
I S I I I S I S I S I I S S I I S I S I S

प्रसादरहितं च नेष्यते कविभिः काव्यमुदीच्यवृत्तिभिः॥
—इति महाकवेर्हलायुधस्य ॥३८॥

आभ्यां युगपत्प्रवृत्तकम् ॥३९॥

आभ्यां पूर्वोक्तलक्षणाभ्यां युगपत्प्रवृत्ताभ्यां प्रवृत्तकं नाम वैतालीयम्। युक्पादे पञ्चमेन पूर्वः संयुज्यते, अयुक्पादे तृतीयेन द्वितीयः सङ्गच्छते। उदाहरणं यथा—

रगणः ल. गु. रगणः ल. गु.

१ ३ ४ ५ ६ ८ ९ ११ १२ १४ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६
I S I I I S I S I S S I S I I I S I S I S

इदं भरतवंशभूभृतां श्रूयतां श्रुति-मनोरसायनम्।

रगणः ल. गु. रगणः ल. गु.

१ ३ ४ ५ ६ ८ ९ ११ १२ १४ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६
I S I I I S I S I S S I S I I I S I S I S

पवित्रमधिकं शुभोदयं व्यासवक्त्रकथितं प्रवृत्तकम्॥
—इति महाकवेर्हलायुधस्य ॥३९॥

## अयुक् चारुहासिनी ॥४०॥

यस्य सर्वे पादा अयुग्लक्षणयुक्तास्तद् वैतालीयं चारुहासिनी नाम। किं तल्लक्षणम्? चतुर्दशमात्रत्वं तृतीयेन पूर्वस्य योगः उदाहरणं यथा—

रगणः ल.गु. रगणः ल.गु.

१ ३ ४ ५ ६ ८ ९ ११ १२ १४ १ ३ ४ ५ ६ ८ ९ ११ १२ १४

। ऽ । । । ऽ । ऽ । ऽ । ऽ । । । ऽ । ऽ । ऽ

अमन्दरविचन्द्रसुन्दरा ग्रहावलिविभूषिताम्बरा।

रगणः ल.गु. रगणः ल. गु.

१ ३ ४ ५ ६ ८ ९ ११ १२ १४ १ ३ ४ ५ ६ ८ ९ ११ १२ १४

। ऽ । । । ऽ । ऽ । ऽ । ऽ । । । ऽ । ऽ । ऽ

बिभाति रुचिरा विभोः प्रभोः कलामयकृतिर्वराद्भुता ॥४०॥

## युगपरान्तिका ॥४१॥

युग्लक्षणयुक्तैश्चतुर्भिः पादैः 'अपरान्तिकं' नाम वैतालीयम्। किं तल्लक्षणम्? षोडशमात्रत्वं पञ्चमेन पूर्वस्य योगः षण्णां मिश्राणां प्रोयगश्च। उदाहरणं यथा—

रगणः ल.गु. रगणः ल.गु.

१ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६ १ २ ३ ५ ६ ८ १० ११ १३ १४ १६

। । । ऽ । । । ऽ । ऽ । ऽ । । । ऽ । ऽ ऽ । ऽ । ऽ

गिरिनदीविपिनमण्डितान्तरा विविधधान्यपूर्णा वसुन्धरा।

रगणः ल.गु रगण. ल. गु.

१ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६ १ २ ३ ५ ६ ७ ८ १० ११ १३ १४ १६
। । । S । । । S । S । S । । । S । । । S । S । S
हरति कस्य हृदयं न देहिनो मृगविहङ्गमनिनादमञ्जुला ॥४१॥

इति वैतालीयाधिकारः।

---

अथ मात्रासमकाधिकारः—

गन्ता द्विर्वसवो मात्रासमकं ल् नवमः ॥४२॥

'वैतालीयं द्विःस्वरा'...(पि० ४।३२) इत्यादिसूत्रात् सप्तम्यन्तं पादग्रहणमनुवर्तनीयम्। ल् इति च महानधिकारः। तेनायं भावः— यत्र पादे गन्ताः सन्तः षोडशलकारा जायन्ते तन्मात्रासमकं नाम छन्दो विद्यते। अन्ते द्वाभ्यामेको गुरुर्विधेयः। नवमश्च लकार एव। द्विर्वसव इति द्विगुणिता वसवः षोडशलकारा विज्ञेयाः। 'शेषे परेण युङ् न साकम्' (पि० ४।३५) इति सूत्रमनुकर्षणीयम्। उदाहरणं यथा—

१ ४ ५ ६ ८ ९ १०१२ १४ १६ २ ४ ६ ८ ९१०१२ १४१६
S S । । S । । S S S S S S S । । S S S
आचार्यकुलात् कुशलो बालो योऽधीत्याङ्गैः सकलं वेदम्।
२ ४ ५ ६ ८ ९ १०१२ १४ १६ २ ४ ५ ६ ८ ९१०१२ १४१६
S S । । S । । S S S S S । । S । । S S S
निर्याति बुधो विमलैः शीलै—र्लोके लभते सुयशो वर्णी॥

"वैतालीयं द्विःस्वरा अयुक्पादे युग्वसवोऽन्ते लर्गः" (पि० ४।३२) इत्यनेनैवान्तस्य गुरुत्वे सिद्धे पुनर्गन्तग्रहणमातिदेशिकगुरुत्वनिवृत्यर्थम्। तेनात्र द्वौ लकारौ भङ्क्त्वा द्विमात्रिको गुरुः क्रियत इति वाक्यशेषः ॥४२॥

द्वादशश्च वानवासिका ॥४३॥

यस्य मात्रासमकस्य पादे द्वादशो लकारोऽवतिष्ठते चकारान्नवमश्च तन्मात्रासमकं वानवासिका नाम छन्दः। उदाहरणं यथा—

२ ३ ४ ६ ८ ९ १० ११ १२ १४ १६    १ २ ३ ४ ६ ७ ८ ९ १० ११ १२ १४ १६
S I I S S I I I I S S    I I I I S I I I I S I   S S
वैदिकधर्मध्वनिरमणीयो विजयमहोत्सवपटहनि-नादः।
१ २ ४ ६ ८ ९ १० ११ १२ १४ १६    २ ३ ४ ६ ८ ९ १० ११ १२ १४ १६
I I S S S I I I I S I    S I I S S I I I I S S
नितरामार्य-प्रतिनिधिजन्यः कस्य न चित्तं रमयति पुंसः॥
—इति कविवराखिलानन्दः ॥४३॥

विश्लोकः पञ्चमाष्टमौ ॥४४॥

द्वादशग्रहणं नवमग्रहणं च निवृत्तम्। यत्र चतुर्षु पादेषु पञ्चमाष्टमौ लकारौ तिष्ठतः शेषं यथाप्राप्तं तन्मात्रासमकं विश्लोको नाम छन्दो निगद्यते। उदाहरणं यथा—

२ ४ ५ ६ ७ ८ १० १२ १४ १६    २ ३ ४ ८ १० ११ १२ १४ १६
S S I I I I S S S S    S I I I I I I S I I S S
भ्रातर्गुणरहितं विश्लोकं दुर्नयकरणकदर्थितलोकम्।

२ ४ ५ ६ ७ ८ १० ११ १२ १४ १६ २ ४ ५ ६ ७ ८ १० ११ १२ १४ १६
S S | | | | S | | S S S S | | | | S | | S S
जातं महितकुलेऽप्यविनीतं मित्रं परिहर साधुविगीतम् ॥
—इति महाकवेर्हलायुधस्य ॥४४॥

## चित्रा नवमश्च ॥४५॥

यस्य नवमो लकार एवावशिष्यते चकारात्पञ्चमाष्टमौ च तन्मात्रासमकं चित्रा नाम छन्दः। उदाहरणं यथा—

१ २ ४ ५ ६ ७ ८ ९ १० १२ १४ १६ २ ४ ५ ६ ७ ८ ९ १० ११ १२ १४ १६
| | S | | | | | | S S S S S | | | | | | | | S S
यदि वाञ्छसि परपदमारोढुं मैत्रीं परिहर सह वनिताभिः।
२ ३ ४ ५ ६ ७ ८ ९ १० १२ १४ १६ २ ४ ५ ६ ७ ८ ९ १० १२ १४ १६
S | | | | | | | | S S S S S | | | | | | S S S
मुह्यति मुनिरपि विषयासङ्गा—च्चित्रा भवति हि मनसो वृत्तिः॥
—इति महाकवेर्हलायुधस्य।

१ २ ४ ५ ६ ७ ८ ९ १० १२ १४ १६ २ ४ ६ ७ ८ ९ १० ११ १२ १३ १४ १६
| | S | | | | | | S S S S S | | | | | | | | S S
अयि वाञ्छसि यदि मुदमत्यन्तां शीघ्रं गुरुकुलमनुसर तावत्।
२ ३ ४ ५ ६ ७ ८ ९ १० १२ १४ १६ २ ४ ५ ६ ७ ८ ९ १० १२ १४ १६
S | | | | | | | | S S S S S | | | | | | S S S
जाह्नवी-परिसरसविधात्रासं यत्रा-भवति हि मनुजो विद्वान्॥
—इति कविवराखिलानन्दः ॥४५॥

## परयुक्तेनोपचित्ता ॥४६॥

परयुक्तेन दशमेन सह संयुक्तेन नवमेन उपचित्रा नाम छन्दो

भवति। पूर्वं लघुनियमेन लक्षणमुदीरितमिदन्तु गुरुनियमेन कथ्यते। उदाहरणं यथा—

२ ४ ६ ७ ८ १० ११ १२ १४ १६ २ ४ ६ ७ ८ १० ११ १२ १४ १६
S SS ।।S।।SS SS S।।S ।।S S
यच्चित्तं गुरुसक्तमुदारं विद्याभ्यासमहाव्यसनं च।

२ ४ ६ ७ ८ १० ११ १२ १४ १६ २ ३ ४ ६ ७ ८ १० ११ १२ १४ १६
S S S। ।S।।SS S।।S ।।S।।SS
पृथ्वी तस्य गुणैरुपचित्रा चन्द्रमरीचिनिभैर्भवतीयम्॥

—इति महाकवेर्हलायुधस्य ॥४६॥

## एभिः पादाकुलकम् ॥४७॥

एषां पञ्चानां मध्ये यैः कैश्चिदपि चतुर्भिः पादैः पादाकुलकं नाम छन्दः। मात्रासमकोदाहरणम्—

२ ४ ६ ८ ९ १० १२ १४ १६
SS S S।।SSS
चित्तं भ्राम्यत्यनवस्थानम्,

उपचित्रोदाहरणम्—

२ ४ ५ ६ ८ १० ११ १२ १४ १६
SS।।S S।।SS
पादाकुलक— श्लोकसमानम्।

२ ४ ६ ७ ८ १० ११ १२ १४ १६
SSS।। S।।S S
कायः कायति शायति शक्तिः,

विश्लोकोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८ १० १२ १४ १६
। । । । । । । । S S S S
तदपि न मम परलोके भक्तिः ॥
—इति महाकवेर्हलायुधस्य ।

उपचित्रापादेनैकेन वानवासिकापादेन पुनरुपचित्रा-पादाभ्यां पादाकुलकम् । तत्रोदाहरणम्—

१ २ ३ ४ ६ ७ ८ १० ११ १२ १४ १६ १ २ ३ ४ ६ ७ ८ ९ १० ११ १२ १४ १६
। । । । S । । S । । S S । । । । S । । । । । । S S
परिहृतसर्वपरिग्रह-लोकः प्रतिदिनवर्धितगुरुतर—शोकः ।
३ ४ ६ ७ ८ १० ११ १२ १४ १६ २ ४ ५ ६ ८ १० ११ १२ १४ १६
S । । S । । S । । S S S S । । S S । । S S
दुःखविवर्धितलोचनवारिः पादाकुलकं याति तवारिः ॥
—इति महाकवेर्हलायुधस्य ॥४७॥

इति मात्रासमकाधिरः ॥

---

साम्प्रतं गीत्यार्याभेदाः प्रारभ्यन्ते—

गीत्यार्या लः ॥४८॥

यत्र पादे द्विर्वसवः=षोडशलकारा भवन्ति सा गीत्यार्या नाम जातिः । ल इत्यनुवर्तमाने पुनर्लग्रहणं द्विमात्रिकनिवृत्त्यर्थम् ।

उदाहरणं यथा—

१ २ ३ ४ ५ ६ ७ ८ ९१०१११२ १३१४ १५ १६
। । । । । । । । । । । । । । । ।
मदकलखगकुलकलरव—मुखरिणि

१ २ ३ ४ ५ ६ ७ ८ ९१०१११२१३१४१५ १६
। । । । । । । । । । । । । । । ।
विकसितसरसिजपरिमलसुरभिणि ।

१ २ ३ ४ ५ ६ ७ ८ ९१० ११ १२१३१४ १५१६
। । । । । । । । । । । । । । । ।
गिरिवरपरिसरसरसि महति खलु

१ २ ३ ४ ५ ६ ७ ८ ९१० ११ १२ १३१४१५१६
। । । । । । । । । । । । । । । ।
रतिरतिशयमिह मम हृदि विलसति ॥
—इति महाकवेर्हलायुधस्य ।

यथ च—

१ २ ३ ४ ५ ६ ७ ८ ९१०१११२ १३ १४१५ १६
। । । । । । । । । । । । । । । ।
यदि तव शुभकृतिमनुगत—मतिशयि

१ २ ३ ४ ५ ६ ७ ८ ९१० १११२१३ १४१५१६
। । । । । । । । । । । । । । । ।
मन इति मम पुनरनुगिरम—नुसर ।

१ २ ३ ४ ५ ६ ७ ८ ९१०१११२१३१४ १५१६
। । । । । । । । । । । । । । । ।
परिहर जनभयमुपनदि कुरु गृह—

१ २ ३ ४ ५ ६ ७ ८ ९१०१११२ १३१४१५१६
। । । । । । । । । । । । । । । ।
मनुदिनमनुवद शिव इति नरवर ॥
—इति कविवराखिलानन्दस्य ॥४८॥

## शिखा विपर्यस्तार्धा ॥४९॥

सैव गीत्यार्या विपर्यस्तार्धा यदा जायते तदा 'शिखा' इत्याख्यां लभते। अयं भावः—यत्रार्धं सर्वलघु विद्यतेऽर्धं च सर्वगुरु लसतीति ॥४९॥

एवं शिखाया एव रचनावैशिष्ट्येन संज्ञाद्वयं कथयति—

## लः पूर्वश्चेज्ज्योतिः ॥५०॥

पूर्वश्चेदर्धभागः सर्वलघुर्द्वात्रिंशल्लकारो भवति, उत्तरश्च भागः सर्वगुरुः षोडशगकारस्तदा ज्योतिर्नाम शिखाऽऽख्यायते। उदाहरणं यथा—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। । । । । । । । । । । । । । । ।
यदि सुखमनुपममपरमभिलषसि
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। । । । । । । । । । । । । । । ।
परिहर युवतिषु रतिमतिशयमिह।
२ ४ ६ ८ १० १२ १४ १६
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आत्मज्योतिर्योगाभ्यासाद्
२ ४ ६ ८ १० १२ १४ १६
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
दृष्ट्वा दुःखच्छेदं कुर्याः॥

—इति महाकवेर्हलायुधस्य।

अपरश्च—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। । । । । । । । । । । । । । । ।
जगदिदमतिलघु फलमिव विलुठति

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। । । । । । । । । । । । । । । ।
महदपि महिमनि रविशशिगतिमति।

६ ८ १० १२ १४ १६
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
सोऽलं सर्वैः सेव्यो मर्त्यै—

४ ६ ८ १० १२ १४ १६
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
रीशः साक्षी कूटस्थोऽजः ॥

—इति कविवराखिलानन्दस्य ॥५०॥

गश्चेत्सौम्या ॥५१॥

तस्या एव शिखायाः पूर्वार्धभागः सर्वगुरुः=षोडशगकार- श्चेत्स्याद्–उत्तरश्च द्वात्रिंशल्लकारो भवेत् तदा 'सौम्या' इति संज्ञान्तरं लभते। उदाहरणं यथा—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
यस्मिन् दृष्टे सर्वं दृष्टं चित्तस्यान्तर्नूनं भाति।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। । । । । । । । । । । । । । । ।
गृहगतधनमिव करगतफलमिव,

१७१८१९ २०   २१२२ २३२४   २५२६२७२८२९ ३०३१३२
। । । ।   । । । ।   । । । । ।   । । ।
निजहृदि नर-वर तमनिशम-नुभज ।।
—इति कविवराखिलानन्दशर्मणः ।।५१।।

## चूलिकैकोनत्रिंशदेकत्रिंशदन्ते ग् ।।५२।।

अर्धग्रहणं (पि० ४।४६) अनुवर्तते। यत्र प्रथमेऽर्ध एकोत्रिंशल्लकारा भवन्ति द्वितीये चार्ध एकत्रिंशत् तयोश्चान्ते द्वौ लकारावुन्मूल्य प्रत्येकमेको गुरुः क्रियते तत् 'चूलिका' नाम छन्दो वर्तते। अन्ते ग् इति विशेषोपादानबलादन्येषां लघुत्वमुदीर्यते। तेनाद्ये सप्तविंशतिर्लघवोऽन्ते गुरुरेको विद्यते। द्वितीयेऽप्येकोनत्रिंशल्लघवोऽन्ते गुरुश्चैकः। उदाहरणं यथा—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५
। । । । । । । । । । । । । । ।
यदि तव गिरिवनपरिसर-विषय—

१६ १७ १८ १९ २० २१ २२ २३ २४ २५   २६ २७ २८
। । । । । । । । । ।   । । ऽ
सुखमतिगुणकरमिह समये।

१ २ ३ ४ ५ ६   ७ ८ ९ १० ११ १२ १३ १४ १५ १६
। । । । । ।   । । । । । । । । । ।
अनुभवमपि कुरु बुधवर जगदिद—

१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३१
। । । । । । । । । । । । । ऽ
मतिविकलमिति हृदि विमलतया।।
—इति कविवराखिलानन्दशर्मणः ।।५२।।

इदानीं गणमात्राच्छन्दसां गुरुलघुसंख्याविज्ञानार्थमिदमुदीर्यते वृत्तिकारेण—

सा ग् येन न समा लां ग्ल इति ॥५३॥

सा गुरुसंख्याविज्ञेया, येन=यावद्भिरक्षरैः, लां=लघूनां मात्राणां समाः=समसंख्या, ग्लो न स्युरपितु न्यूनसंख्या एव। ग्ल इत्यक्षराण्यभिधीयन्ते तेषां गुरुलघुरूपत्वात्। अयमाशयः-आर्यादिषु शास्त्रे यावत्यो मात्रा उपदिष्टास्तावन्त्यक्षराणि यथासंख्यं न पूर्यन्ते, सा तत्र गुरुसंख्या विज्ञेया, अवशिष्टा लघुसंख्या। तत्रायमुपयोगः—यदा कश्चिदनुयुङ्क्ते द्वात्रिंशदक्षरायामुपगीत्यार्यायां कति गुरवो जायन्ते कति वा लघव इति, तदा चतुःपञ्चाशन्मात्रोपदिष्टायामार्यायां मात्रासंख्यायां द्वात्रिंशदक्षरसंख्यामपनीय तत्र येऽवशिष्यन्ते तान् गुरूनुपदिशेत् ते च द्वाविंशतिसंख्याकाः शेषास्तु दश सन्ति लघवः। उदाहरणं यथा—

१-२ ३-४ ५-६ ७-८ ९१० १११२ १३ १४ १५१६१७१८१९२०२१२२२३ २४२५ २६२७ मात्राङ्काः
ऽ ऽ ऽ ऽ ऽ ऽ । । ऽ ऽ ऽ । ऽ ऽ ऽ
व-आ-न-न्दा-रा-मे, नि-त-रा-मा-न-न्द-य-ल्लो-कान्।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ अक्षराङ्काः

२८२९३०३१३२३३ ३४ ३५ ३६ ३७ ३८३९ ४० ४१ ४२४३४४४५ ४६४७ ४८ ४९५० ५१५२५३५४
ऽ ऽ ऽ । । । । ऽ । । ऽ ऽ ऽ । ऽ ऽ ऽ
सा-न-न्दं कि-ल कृ-त-वान्, व-स-तिं श्री·मान् द-या-न-न्दः।
१६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२

इति श्रीमन्मुनिमेधाव्रताचार्यरचितायां
व्रतिमङ्गलायां छन्दःसूत्रवृत्तौ
चतुर्थोऽध्यायः ॥४॥

# अथ पञ्चमोऽध्यायः

## वृत्तम् ॥१॥

अधिकारोऽयमाशास्त्रावसानात्। यदित ऊर्ध्वमनुक्रमिष्याम-स्तद् वृत्तमिति वेदनीयम्। तेन प्राक्तनं लौकिकं छन्दोजातं जातिरित्यभिधीयते। इत उत्तरं च वृत्तं कथ्यते। तथा चोक्तं "पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा" (का० द० १।११) गायत्र्यादौ छन्दसि वर्तत इति वृत्तम्। तच्च स्थिरगुरुलघ्वक्षर-विन्यासमभिलष्यते। पादेन सयोगात् पद्यम्। तथा चोक्तम्—

"एकदेशस्थिता जातिर्वृत्तं गुरुलघुस्थितम्" ॥१॥

## सममर्धसमं विषमं च ॥२॥

समसर्वावयवत्वात् 'समम्'। यस्य चत्वारः पादा एक-लक्षणयुक्तास्तत् समं वृत्तम्। शेषञ्च नामानुरूपमेव। तत्रार्धे समे यस्य तद् 'अर्धसमम्'। सर्वावयवेभ्योऽर्धाभ्यां च विगतं समं यस्य तद् विषमम्। एवं त्रिविधमपि वृत्तवृन्दमुदीरितम् ॥२॥

## समं तावत्कृत्वः कृतमर्धसमम् ॥३॥

'समम्' इति समवृत्तसंख्योच्यते। तयैव गुणितं 'तावत्कृत्वः कृतम्' उच्यते। अयं भावः—समवृत्तसंख्यागुणिते समवृत्त-संख्यायाः पिण्डे या संख्या निष्पद्यते तावत्संख्यमर्धसममवगन्तव्यम्। तत्र गायत्रे छन्दसि समवृत्तसंख्या चतुःषष्टिरष्टमाध्यायसिद्धा।

तस्यां चतुःषष्टिसंख्यागुणितायामर्धसमवृत्तसंख्या निष्पद्यते। ६४×६४=४०९६ चत्वारि सहस्राणि षण्णवतिश्च वृत्तानि ॥३॥

विषमं च ॥४॥

अर्धसमं तावत्कृत्वः कृतं 'विषमं' भवति। अयमाशयः- अर्धसमवृत्तसंख्या (४०९६) अर्धसमवृत्तसंख्यया (४०९६) एव गुणिता विषमवृत्तसंख्या सम्पद्यते—एका कोटिः, सप्तषष्टि-लक्षाणि, सप्तसप्ततिसहस्राणि, द्वे शते षोडशोत्तरे (४०९६×४०९६= १,६७,७७,२१६) इति। समसमार्धसमोपचितमर्धसमं विषमं च यथाक्रमं समवृद्धं समार्धसमाभ्यां च समेधितं ज्ञातव्यम् ॥४॥

राश्यूनम् ॥५॥

तद् विषमं वृत्तं (१,६७,७७,२१६) अर्धसमं (४,०९६) वा राश्यूनम् (१,६७,७७,२१६—४,०९६=१,६७,७३,१२०) कर्त्तव्यम्। मूलराशिः (४,०९६) समुदायात् (१,६७,७७,२१६) अपनेतव्येति। कोटिरेका, सप्तषष्टिर्लक्षाणि, त्रिसप्ततिसहस्राणि, विंशत्युत्तरं शतं शुद्धविषमवृत्तस्य संख्या। चत्वारि सहस्राणि द्वात्रिंशच्चेति शुद्धार्धसमसंख्या ॥५॥

ग्लिति समानी ॥६॥

गकारलकाराभ्यां यद् वृत्तमवसितं भवति तत् समानी नाम। "पादस्यानुष्टुब्वक्त्रम्" (पि० ५।९) इत्यतः सूत्रात् सिंहावलोकितन्यायेनाष्टुब्ग्रहणमनुकर्षणीयम्। तेनाष्टाक्षरः पादो यावद्भिर्गकारलकारैः पूर्यते तावतामेव ग्रहणम्। उदाहरणं यथा—

ऽ। ऽ। ऽ। ऽ। ऽ। ऽ। ऽ। ऽ।
ब्रह्मचर्यपालनेन देहचारुतां य एति।

S ।S ।S ।S । S ।S। S।S ।

तत्समानता बले नु कः करोतु निर्जरोऽपि ॥

(दयानन्ददिग्विजयमहाकाव्ये १२।७६)

अथ च—

S।S । S।S। S।S।S । S।

शङ्करोऽपि दिग्जयेन यत्समानतां न याति ।

S। S।S।S। S। S।S ।S।

तस्य मूलशङ्करस्य केन तुल्यता क्रियेत ॥

—इति कविवराखिलानन्दशर्मणः ॥

## ल्गिति प्रमाणी ॥७॥

लकारगकाराभ्यां यद्वृत्तं सम्पद्यते तत् प्रमाणी नाम । उदाहरणं यथा—

।S।S।S।S ।S।S ।S ।S

शरीरमानसात्मनां पराक्रमे मतौ बले ।

।S ।S।S।S । S।S ।S।S

मुनेः प्रमाणवेदने न कोऽप्यलं सुरेष्वहो ॥

(दयानन्ददिग्विजयमहाकाव्ये १२।७७)

अथ च—

।S।S।S ।S ।S। S।S ।S

दयानिधेरियं दया यदत्र भूतले परा ।

।S।S।S।S।S ।S ।S ।S

समाऽवृद्धिरुत्तरोत्तरा निरीक्ष्यते जनैः ॥

—इति कविवराखिलानन्दशर्मणः ॥७॥

## वितानमन्यत् ॥८॥

आभ्यां समानीप्रमाणीभ्यामन्यदष्टाक्षरपादं छन्दो वितान नाम। उदाहरणानि यथा तत्र प्रथमम्—

S S ।।SS ।। SS ।। SS ।।
विष्णोः पदकञ्जं भज गङ्गाम्बुनि पापं क्षिणु।
S S ।। S S ।। SS ।।SS।।
मूर्ति नम मुक्तिं व्रज यत्र ध्वनिरश्रूयत ॥
(दया० महा० १२।८०)

द्वितीयम्—

।। S S ।।SS ।।SS।।S S
अथ यातो यतिराजः स हरिद्वारसुतीर्थम्।
।।S S।।SS ।।S S।।SS
भवति द्वादशवर्षे विपुलं कुम्भवितानम् ॥
(दया० महा० १२।७८)

तृतीयम्—

S S ।S। S।S SS।S।S।S
सन्तो महान्त आगताः संन्यासिनस्तपस्विनः।
SS।S। S।S SS।S। S।S
वैराग्यवन्त एकतो मायाभृतोऽपि चान्यतः॥
(दया० महा० १२।७९)

चतुर्थम्—

S ।।S।।SS S।।S।।SS
शुक्लसुचैलवितानं भूपतिसाधुवराणाम्।

S I I S I I S S    S I I S I I S S
देवनदीमभितोऽलं    मञ्जुलकान्तिमतानीत् ॥
(दया० महा० १२।८१)

S S I I S S I I I I S S S S I I
मूर्ति जहि वेदं श्रय विषये चेतो मा नय।
S S I I S S I I S S I I S S I I
काम्या यदि मुक्तिस्तव विद्यामनिशं सेवय ॥
—इति कविवराखिलानन्दशर्मणः ।

S S I I S S I I S S I I S S I I
तृष्णां त्यज धर्मं भज पापे हृदयं मा कुरु।
S S I I S S I I S S I I S S I I
इष्टा यदि लक्ष्मीस्तव शिष्टाननिशं संश्रय ॥
I I S S I I S S I I S S I I S S
हृदयं यस्य विशालं गगनाभोगसमानम्।
I I S S I I S S I I S S I I S S
लभतेऽसौ मणिचित्रं नृपति-र्मूर्ध्निवितानम् ॥
—इति महाकवेर्हलायुधस्य ॥८॥

## पादस्यानुष्टुब्वक्त्रम् ॥९॥

पादस्य इत्ययमधिकार आसप्तमाध्यायपर्यन्तात्। अनुष्टुब्वक्त्रमिति च प्राक् "प्रतिपादं चतुर्वृद्ध्या पदचतुरूर्ध्वम्" (पि० ५।२०) इत्यतोऽधिकृतमवगन्तव्यम् ॥९॥

न प्रथमात्स्नौ ॥१०॥

प्रतिषेधार्थमिदं सूत्रम्। अत्र वक्त्रजातौ पादस्य प्रथमाक्षरादूर्ध्वं सगणनगणौ न करणीयौ ॥१०॥

द्वितीयचतुर्थयो रश्च ॥११॥

द्वितीयचतुर्थयोश्च पादयोः प्रथमादूर्ध्वं रेफो न विधेय इत्युपदेशः ॥११॥

वान्यत् ॥१२॥

अन्येषां षण्णां गणानां मध्ये यत्किञ्चिद् गणान्तरं प्रथमान्तरं करणीयम्। अयं भावः–अत्र वक्त्रजातौ पादमात्रे प्रथमाक्षरात्परं मगणादीनां मध्ये यत्किञ्चित् त्रिकान्तरं वा कर्त्तव्यं न नियमेनेत्यर्थः ॥१२॥

यश्चतुर्थात् ॥१३॥

पादस्य चतुर्थादक्षरादूर्ध्वं नियमेन यगणः प्रयोक्तव्यः। उदाहरणं यथा—

ल. यगणः यगणः ल. ल. यगणः यगणः गु.

I ISS I SS I I IS S IS S S

मु—निवक्त्रे—न्दु बिम्बोत्थ—नि-गमोक्ता—मृतं भ—द्रम्।

गु. जगणः यगणः गु. ल. तगणः यगणः गु.

S ISI ISS S I SSI ISS S

स—म्पपुष्टं—चकोरा—स्ते ह्य—नुष्टुब्धद्दशस्तथ्यम् ॥१३॥

(दया० महा० १२।८६)

## पथ्या युजो ज् ॥१४॥

चतुर्थाद् (पि० ५।१३) इत्यनुवर्तते। अत्र वक्त्रे युजः [२,४] पादस्य चतुर्थादक्षरादूर्ध्वं जगणः प्रयुज्यते तद्वक्त्रं पथ्या नाम। यकारस्यापवादः। उदाहरणं यथा—

गु. तगणः यगणः ल. गु. यगणः जगणः ल.

ऽ ऽ ऽ। ।ऽ ऽ । ऽ ।ऽ ऽ ।ऽ। ।

वे—दोक्तानु—गुणं त—स्य—भा—षणं शृ—ण्वताङ्ग—लु।

ल. यगणः यगणः गु. गु. मगणः जगणः गु.

। ।ऽऽ ।ऽऽ ऽ ऽ ऽऽऽ ।ऽ।ऽ

श्रु—तिपथ्या—जुषां न—ष्टा नृ- णां मृत्यू—द्भवामयाः ॥१४॥

(दया० महा० १२।९०)

## विपरीतैकीयम् ॥१५॥

उक्तलक्षणाद् विपरीता पथ्या भवतीत्यैकीयं मतम्। अयुक्पादे चतुर्थादक्षरात्परतो जकारः कर्त्तव्यः, युक्पादे यकार एवावर्तते। उदाहरणं यथा—

गु. यगणः जगणः गु. गु. मगणः यगणः गु.

ऽ ।ऽऽ ।ऽ। ऽ ऽ ऽ ऽ ऽ ।ऽऽ ऽ

वे—दमार्गा—नुगामि—नो या धीः स्यात्सा समीची—ना।

गु. यगणः जगण. गु. ल. यगणः यगण. गु.

S ISS ISI S I ISS ISS I

अ—न्यवादा—नुवर्ति—नी वि—परीताऽसमीचो—ना ॥

—इति कविवराखिलानन्दशर्मणः ॥१५॥

## चपला युजो न् ॥१६॥

अयुक्—(१, ३) पादस्य यदा चतुर्थादक्षरादूर्ध्वं नकारो भवति युक्पादे (२, ४) यकार एवावतिष्ठते तदा चपला नाम सानुष्टुप्। उदाहरणं यथा—

गु. यगणः नगणः गु. गु. यगणः यगणः गु.

S ISS III S SIS S ISS S

व्या—पकाजे—श्वरव—पु—र्धारणं वे—दतर्का—भ्याम् ।

गु. यगणः नगणः गु. ल. यगणः जगणः गु.

S ISS III S IIS S ISI S

ख—ण्डितं ते—न चप—ला रुषिताः पू—जकास्त—तः ॥१६॥

(दया० महा० १२।९३)

## विपुला युग्लः सप्तमः ॥१७॥

अधिकारोऽयम् । यश्चतुर्थात् (पि० ५।१३) इत्यनेन सर्वत्र यकारे कृते यदा युक्पादे (२, ४) सप्तमो वर्णो लघुर्भवति तदा विपुला नाम सानुष्टुप् ॥१७॥

## सर्वतः सैतवस्य ॥१८॥

सैतवस्याचार्यस्य मतेन युक्पादे (२,४) अयुक्पादे (१,३) च सप्तमो लकार एव कर्त्तव्यः। उदाहरणं यथा—

गु. जगणः जगणः गु. गु भगणः जगणः गु.
S ।S। ।S। S S S।। ।S। S
सा—म्प्रदायि—कधर्म—भृ—द्धा—न्यां घृति—मतां व—रः।

गु. भगणः जगणः गु. ल. मगणः जगणः गु.
S S।। ।S। S । SSS ।S। S
मूर्त्यर्चन—विखण्ड—नं च—काराम्ना—यतत्त्ववित् ॥१८॥
(दया० महा० १२।६२)

## भ्रौ न्तौ च ॥१९॥

सर्वतः सैतवस्य (पि० ५।१८) इति निवृत्तम्। चपला युजो न् (पि० ५।१६) इत्येतस्मादयुग्ग्रहणमनुसरति। विपुला युग्ल सप्तमः (पि० ५।१७) इति सर्वमनुवर्तनीयम्। अयुक्पादे (१,३) यदा चतुर्थादक्षरात्परतो यकारं बाधित्वा भकार-रेफ-नकार-तकारा विकल्पेन भवन्ति तदासौ विपुलाऽऽख्यायते। तत्र भकारेण विपुलोदाहरणम्—

ल. रगणः भगणः गु. ल. मगणः जगणः गु.
। S।। S ।। S । SS S ।S। S
पु—राणली—ला विपु—ला म—नोज्ञा—व—ल्लरीव सा।

लकार-गकारा राजन्ते तद् वृत्तं भ्रमरविलसितं नाम गीयते। चतुर्षु सप्तसु च यतिः। उदाहरणं यथा—

मगणः भगणः नगणः ल. गु

S S S S I I I I I I S

सौख्यं लो—के विष—यजम—नि—शं

मगणः भगणः नगणः ल. गु.

S S S S I I I I I I S

ज्ञेयं म—र्त्यैर्भ्र म—रविल—सि—तम्।

मगणः भगणः नगणः ल. गु.

S S S S I I I I I I S

तस्माद् ध—र्मो निग—मनिग—दि—तः

मगणः भगणः नगणः ल. गु.

S S S S I I I I I I S

पाल्यो भ—क्त्या जनि—मृतिह—त—ये ॥२२।

## रथोद्धता र्नौ र्लौ ग् ॥२३॥

यस्य पादे रगण-नगण-रगण-लकार-गकारा भवन्ति तद् वृत्तं 'रथोद्धता' नाम संगीयते। पादान्ते यतिः। उदाहरणं यथा—

रगणः नगणः रगणः ल गु.

S I S I I I S I S I S

स्वामिना हितक—रैस्सुभा—ष—णै-

रगणः नगणः रगणः ल. गु.

S I S I I I S I S I S

र्नन्दिता—श्च जन—ता मनो—र—मैः।

रगण. नगणः रगणः ल. गु.

S I S I I I S I S I S

नन्दय—त्यतिश—यं हिता प्रि—या

रगणः नगणः रगणः ल. गु.

S I S I I I S I S I S

मानसं तुदति गीरथो—द्ध—ता ॥२३॥

दया० महा० (१२।४९)

## स्वागता र्नौ भ्गौ ग् ॥२४॥

यस्य पादे रगण— नगण— भगणा गकारौ च विराजेते तद् वृत्तं 'स्वागता' नामाभिधीयते। पादान्ते यतिः। उदाहरणं यथा—

रगणः नगणः भगणः गु. गु.

ऽ।ऽ ।।। ऽ।। ऽ ऽ
श्यामव—र्णरुचि—राङ्गयु—वा—नौ

रगणः नगणः भगणः गु. गु.

ऽ।ऽ ।।। ऽ।। ऽ ऽ
नागप—र्वतव—नादुप—या—तौ।

रगणः नगणः भगणः गु. गु.

ऽ ऽ ।।। ऽ ।। ऽ ऽ
योगिनं नियमि—नौ मिल—ना—र्थं

रगणः नगणः भगणः गु. गु.

ऽ।ऽ ।।। ऽ ।। ऽ ऽ
स्वागता-हृतवि—याऽऽसितु—मु—क्तौ ॥२४॥
(दया० महा० १२।३६)

वृन्ता नौ स्गौ ग् ॥२५॥

यस्य पादे नगणौ सगणो गकारौ च शोभेते तद् वृत्तं 'वृन्ता' नाम गद्यते। अत्र मण्डूकप्लुतिन्यायेन समुद्रऋषय इत्यनुवर्तते। तेन चतुर्भिः सप्तभिश्च यतिः। उदाहरणं यथा—

नगणः नगणः सगणः गु. गु

| | | | | | S | | S S

निजगु—रु,विर—हभवैः खे—दै-

नगणः नगणः सगणः गु. गु.

| | | | | | S | | S S

विकलि—त,मृदु–लहृदो नू–नम् ।

नगणः नगणः सगणः गु. गु.

| | | | | | | | S S S

निपति—त,मम—ल-हृशोऽ–स्रु स्राक्

नगणः नगणः सगणः गु. गु.

| | | | | | | | S S S

सुमभि - व, पव—नहतं वृ–न्तात् ॥२५॥

(दया० महा० १२।६०)

## श्येनी र्जौ र्लौ ग् ॥२६।

यस्य पादे रगण–जगणौ रगण-लकारौ गकारश्च भवति तद् वृत्तं 'श्येनी' नाम भाष्यते । पादान्ते यतिः । उदाहरणं यथा—

रगणः जगणः रगणः ल. गु.

S | S | S | S | S | S

उग्रदृ—ष्टिरन्य—भोगयहा—रि–णी

रगणः जगणः रगणः ल. गु.

S I S I S I S I S I S

मांसभ–क्षिणी स–दा कलि–त्रि–या ।

रगणः जगणः रगणः ल. गु.

S S I S I S I S I S

श्येनिके–व निन्दि–तार्यस–न्त–तिः

रगणः जगणः रगणः ल गु.

S I S I S I S I S I S

शोच्यतां गतेत्य–चिन्तय–न्मु–निः । २६॥

(दया० महा० १२।१३२)

विलासिनी ज्रौ ज्गौ ग् ॥२७॥

यस्य पादे जगण–रगणौ जगणो गकारौ च विलसतस्तद् वृत्तं 'विलासिनी' नामोदीर्यते । उदाहरणं यथा—

जगणः रगणः जगणः गु. गु.

I S I S I S I S I S S

विलासि–नीं कुवृ–त्तिमार्य–जा–ति

जगणः रगणः जगणः गु. गु.

I S I S I S I S I S S

दिने दि–ने रसा–तलं व्र–ज–न्तीम् ।

जगणः रगणः जगणः गु. गु.

। ऽ । ऽ । ऽ । ऽ । ऽ ऽ

विलोक्य सूक्ष्मलो—चनैर्म—ह—र्षिः

जगणः रगणः जगणः गु. गु.

। ऽ । ऽ । ऽ । ऽ । ऽ ऽ

शुगम्बु—धौ मम—ज्ज दूर—द—र्शी ॥

(दया० महा० १२।१३१)

## जगती ॥२८॥

अधिकारोऽयमाध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामस्तज्जगतीत्येवं वेदितव्यम्। 'तोटकं सः' इति वक्ष्यति तज्जगतीपादस्य लक्षणं भवति ॥२८॥

## वंशस्था ज्तौ ज्रौ ॥२९॥

यस्य पादे जगणतगणौ जगणरगणौ च वर्तेते तद् वृत्तं 'वंशस्था' नाम गीयते। उदाहरणं यथा—

जगणः तगणः जगणः रगणः

। ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

लभस्व राज्यश्रि—यमञ्ज—सा प्रजा-

जगणः तगणः जगणः रगणः

। ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

भवन्तु भव्याभ्यु—दय—प्र—योजनाः।

जगणः तगणः जगणः रगणः

। ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

यशस्स—रिन्नीर—तरन्न—रा वरं

जगणः तगणः जगणः रगणः

। ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

हरन्तु तापं त—त्र वैरि—सम्भवम् ॥२६॥

(प्रकृतिसौन्दर्ये ३।२२)

## इन्द्रवंशा तौ ज्रौ ॥३०॥

यस्य पादे तगणौ जगणरगणौ च शोभेते तद् वृत्तं 'इन्द्रवंशा' नामोच्यते। उदाहरणं यथा—

तगणः तगणः जगणः रगणः

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

ग्रन्थान—नार्षान् स—मधोत्य वर्णिनो

तगणः तगणः जगणः रगणः

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

बाह्यां प—रीक्षाप—दवीं प्र—लिप्सवः।

तगणः तगणः जगणः रगणः

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

लुम्पन्ति चाचार्य—कुलस्य गौरवं

तगणः तगणः जगणः रगणः

S S | S S I I S I S I S

भञ्जन्ति चाज्ञामृ-षिवर्य-योगिनः ॥

(गुरुकुलशतके ११३ श्लोकः)

अत्र वंशस्थेन्द्रवंशयोरपि प्रस्तारे कृते चतुर्दशधा उपजातयो जायन्ते । तासां स्वरूपोदाहरणं नामादीनि च यथाक्रमं प्रकाश्यन्ते-

(१) गौरः—

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S I S S I I S I S I S

चेतोह—रासर्थ—मयीं सु—सङ्गतां

वंशस्थम्

जगणः तगणः जगणः रगणः

I S I S S I I S I S I S

गिरं स गौरो य-मिनो नि-शम्य ताम् ।

वंशस्थम्

जगणः तगणः जगणः रगणः

I S I S S I I S I S I S

"न शास-काः कस्य-चिदग्रच-धर्मणि-

वंशस्थम्

जगण: तगण: जगण: रगण:

। S । S S । । S । S । S

क्षिपन्ति हस्तानि''ति सं-ज-गाद तम् ॥

(२) गुरुः—

वशस्थम्

जगण: तगण: जगण! रगण!

। S । S S । । S । S । S

अथान्य- दोद्यान-गतां नि-षण्णवा-

इन्द्रवंशा

तगण: तगण: जगण! रगण:

S S । S S । । S । S । S

नासन्दि-कां स्वामि-वरोऽध्य-जीगपत् ।

वंशस्थम्

जगण: तगण: जगण! रगण:

। S । S S । । S । S । S

तदोप—यन्तं ब्रु—कनाम—कं पुरोऽ-

वंशस्थम

जगण: तगण: जगण: रगण!

। S । S S । । S । S । S

ब्रुवन् वि-नेयाः प्र-विलोक्य सद्गुरुम् ॥

(३) कर्म—

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S I S S I I S I S I S

श्रीकर्न—लः शास—नकर्म—दर्शकः

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S I S S I I S I S I S

संन्यासि-नां द्वेष-करः स—मागमत् ।

वंशस्थम्

जगणः तगणः जगणः रगणः

I S I S S I I S I S I S

निजास—नं सार—यतु प्र—तीपतो

वंशस्थम्

जगणः तगणः जगणः रगणः

I S I S S I I S I S I S

मनाग्गु—रो ! तन्न-यनाध्व-नस्ततः ॥

(४) विनयः—

वंशस्थम्

जगणः तगणः जगणः रगणः

I S I S S I I S I S I S

इदन्तु वाञ्छाम्य—हमित्यु—दीर्य स—

वंशस्थम्

जगणः तगणः जगणः रगणः

। S । S S । । S । S । S

यतिस्स्व-वेत्रास-नमग्र-तोऽकरोत् ।

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S । S S । । S । S । S

बिभ्युर्वि--नेया य--तिमग्र--तः स्थितं

वंशस्थम्

जगणः तगणः जगणः रगणः

। S । S S । । S । S । S

निरीक्ष्य चाराम-गतं वि-देशजम् ॥

(५) शान्तः---

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S । S S । । S । S । S

मा भैष्ट रे तिष्ठ-त शान्त-मानसा-

वंशस्थम्

जगणः तगणः जगणः रगणः

। S । S S । । S । S । S

इतीर-यित्वाभ्र--मदन्ति-कं यमी ।

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S I  S S I  I S I  S I S

उष्णीष—मुत्तार्य स साद—रं पुरः

वंशस्थम्

जगणः तगणः जगणः रगणः

I S I  S S I  I S I  S I S

समास—दत् स्वामि-पदं मु—दान्वितः ॥

(६) विचक्षणः—

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S I  S S I  I S I  S I S

हस्तेन हस्तं प—रिगृह्य ताबुभौ

इन्द्रवंशा

तगणः तगणः जगणः रगणः

I S I  S S I  I S I  S I S

मानं मि—थोऽदर्श—यतां वि—चक्षणौ ।

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S I  S S I  I S I  S I S

आसन्दि—के स्वे प्र—ति-सम्मु—खस्थिते

वंशस्थम्

जगणः तगणः जगणः रगण।

। S । S S । । S । S । S

उभाव—लच्चक्र—तुरन्त—तान्तरौ ॥

(६) भव्यम्—

वंशस्थम्

जगणः तगणः जगणः रगणः

। S । S S । । S । S । S

अयो मि-थोऽमू प-रिपृच्छ्य सादरं

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S । S S । । S । S । S

भव्यं नृ-भव्यो-चि-तचारु-चिन्तनौ ।

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S । S S । । S । S । S

वार्ता मु-दा तेन-नृरिन्दु-सुन्दरा-

वंशस्थम्

जगणः तगणः जगणः रगण।

। S । S S । । S । S । S

ननौ प्र-सङ्गोत्त-मसङ्ग-तां शुभाम् ॥

(८) धर्मः—

वंशस्थम्

जगणः तगणः जगणः रगणः

। S । S S । S । S । S

अनन्त–रं योगि- वरोऽन्व-युङ्क्त तं

वंशस्थम्

जगणः तगणः जगणः रगणः

। S । S S । । S । S । S

भवान्नु धर्मं वि–तनोति हन्ति वा ।

वंशस्थम्

जगणः तगणः जगणः रगणः

। S । S S । । S । S । S

न मन्म—हे धर्म—विनाश—नं वरं

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S । S S । । S । S । S

लाभं प—रं यत्र तदेव मन्महे ॥

(९) फलम्

इन्द्रवंशा

तगणः तगणः जगणः रगण

S S । S S । । S । S । S

लाभस्य कार्यं क्रि—यते न शासकै-

वंशस्थम्

जगणः तगणः जगणः रगणः

। S । S S । । S । S । S

विनाश-नं प्रत्यु-त दृश्य-तां कुबेः ।

वंशस्थम्

जगणः तगणः जगणः रगणः

। S । S S । । S । S । S

गवां व—धादत्यु—पकार—कात्मनां

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S । S S । । S । S S

नानाफ-लोत्पत्ति-भृतो नि-रन्तरम् ।।

(१०) जीवनम्—

वंशस्थम्

जगणः तगणः जगणः रगणः

। S । S S । S । S । S

पयस्वि—नो-जीव—नतोऽर्थ—दृष्टितो

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S । S S । । S । S । S

लक्षात्म-नां पाल-नमङ्ग ! जायते ।

वंशस्थम्

जगणः तगणः जगणः रगणः

। S । S S । । S । S । S

अथैक—धेनोर्व—धतो नु केवलं

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S । S S । । S । S । S

पञ्चात्म—नां तुन्द-कृशानु—शामनम् ॥

(११) परमार्थः—

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S । S S । । S । S । S

हानिस्तु गोमार—णतो वि—निश्चिता

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S । S S । । S । S । S

सम्मन्य-ते सा प-रमार्थ-तो मया ।

वंशस्थम्

जगणः तगणः जगणः रगणः

। S । S S । । S । S । S

भवान् म-दीयं भ-वनं इव एतु तद्

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S I S S I I S I S I S

भूयोऽत्र वार्तां त-नितास्म-हे वयम् ।

(१२) ज्योतिः—

वंशस्थम्

जगणः तगणः जगणः रगणः

I S I S S I I S I S I S

अथोत्त—रेद्युभ्र्—कभद्र—वाहनं

वंशस्थम्

जगणः तगणः जगणः रगणः

I S I S S I I S I S I S

ततेरु—पान्तं स—मुपाग—मन्मुनिः ।

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S I S S I I S I S I S

ज्योतिर्वि—दारुह्य समं स—मं ययौ

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S I S S I I S I S I S

हर्म्यं सु—रम्यं नृ—पनीति—भृन्मते: ।।

(१३) रूपम्—

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S I  S S I  I S I  S I S

सम्मान—पूर्वं य—मिनं नि—जालये

वंशस्थम्

जगणः तगणः जगणः रगणः

I S I  S S I  I S I  S I S

स रूप—रामेण समं स—मागतम् ।

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S I  S S I  I S I  S I S

वेत्रास—ने तावु—पविश्य मञ्जुले

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S S I  S S I  I S I  S I S

गोरक्ष-णे मञ्जु-गिराऽऽल-पच्चिरम् ॥

(१४) अर्थः—

वंशस्थम्

जगणः तगणः जगणः रगणः

I S I  S S I  I S I  S I S

यथार्थ-तो हानि-करो ग-वां वधो-

इन्द्रवंशा

तगणः तगणः जगणः रगण,

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

नो मेऽधि–कारः प–रमस्य वारणे।

इन्द्रवंशा

तगणः तगणः जगणः रगणः

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

लाटेन सम्मेल्य सुभाष–तां भवान्

इन्द्रवंशा

तगण, तगणः जगणः रगण,

। ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

पत्रं म–मादर्श्य तमित्यु–वाच सन् ॥३०॥

(दया० महा० स० १२, श्लो० २०-३३)

द्रुतविलम्बितं नभौ भरौ ॥३१॥

यस्य पादे नगण–भगणौ भगण–रगणौ समुल्लसतस्तद् वृत्तं 'द्रुतविलम्बितं' नाम भवति। उदाहरणं यथा—

नगणः भगणः भगणः रगणः

। । । ऽ । । ऽ । । ऽ । ऽ

ऋषिभ—वोत्सव—यज्ञसु—सिद्धये

नगणः भगणः भगणः रगणः

। । । ऽ । । ऽ । । ऽ । ऽ

निरभि–लाषत–यास्य त–पस्विनः ।

नगणः भगणः भगणः रगणः

। । । ऽ । । ऽ । । ऽ । ऽ

अविर–तं विर–तं च वि–लोक्य हृज्-

नगणः भगणः भगणः रगणः

। । । ऽ । । ऽ । । ऽ । ऽ

जनत–या नत–यायम––लं स्तुतः ॥

(नारायणस्वामिचरिते ६।८)

अथ च—

नगणः भगणः भगणः रगणः

। । । ऽ । । ऽ । । ऽ । ऽ

इह वि––हाय वि––हायसि चन्द्रमा-

नगणः भगणः भगणः रगणः

। । । ऽ । । ऽ । । ऽ । ऽ

निजसु––वर्णसु––वर्णमु–––पाहितम् ।

नगणः भगणः भगणः रगणः

। । । ऽ । । ऽ । । ऽ । ऽ

न सक–लाः स क–ला गत–वान्न सन्

नगणः भगणः भगणः रगणः

| | | S | | S | | S | S

धवल–यन् वल–यं वल–न्ते भुवः ॥३१॥

(प्रकृतिसौन्दर्ये २।३८)

तोटकं सः ॥३२॥

जगतीत्यधिकारे यावद्भिः सकारैर्जगतीपादः पूर्यते तावन्त एकपादे सकारा विलसन्ति तद् वृत्तं 'तोटकं' नाम वदन्ति। उदाहरणं यथा—

सगणः सगणः सगणः सगणः

| | S | | S | | S | | S

धनरा—गि विरा—गिकुलं व्यसने-

सगणः सगणः सगणः सगणः

| | S | | S | | S | | S

ष्वखिले—षु निली—नतया विकलम्।

सगणः सगणः सगण. सगणः

| | S | | S | | S | | S

अमता—क्षरले—शमपि स्मयभृन्-

सगणः सगणः सगणः सगणः

| | S | | S | | S | | S

मततो—टकमा—-र्यजनै—रतनोत्॥

(दया० महा० १२।१२२)

अथ च—

सगणः सगणः सगणः सगणः

। । ऽ । । ऽ । । ऽ । । ऽ

लतया कुसुमं कुसुमे—न लता

सगणः सगणः सगणः सगणः

। । ऽ । । ऽ । । ऽ । । ऽ

लतया कुसुमे—न विभा—ति वनम् ।

सगणः सगणः सगणः सगणः

। । ऽ । । ऽ । । ऽ । । ऽ

कविना च सभा सभया च कविः

सगणः सगणः सगणः सगणः

। । ऽ । । ऽ । । ऽ । । ऽ

कविना सभया च विभा-ति नृपः ॥३२॥

पुटो नौ म्यौ वसुसमुद्राः ॥३३॥

यस्य पादे नगणौ मगणयगणौ च भवतस्तद् वृत्तं 'पुटो' नाम निगद्यते । वसुभिः=अष्टभिः समुद्रैः= चतुर्भिश्च यतिः ।, उदाहरणं यथा—

नगणः नगणः मगणः यगणः

। । । । । । ऽ ऽ ऽ । ऽ ऽ

अतुल—मतिपु—टे.लं, पु- ण्यशीलः

नगणः नगणः मगणः यगणः

। । । । । । ऽ ऽ ऽ । ऽ ऽ

श्रुतम-मृतमि-वायं, ती-र्थ-वर्यात् ।

नगणः नगणः मगणः यगणः

। । । । । । ऽ ऽ ऽ । ऽ ऽ

विनय-विनत-मूर्द्धा,ऽऽदा-य शिष्यो

नगणः नगणः मगणः यगणः

। । । । । । ऽ ऽ ऽ । ऽ ऽ

ललित-करपु-टोऽयाद्,भ-द्रकामः ॥३३॥

(दया० महा० १३।५६)

जलोद्धतगतिः जसौ ज्सौ रसर्तवः ॥३४॥

यस्य पादे जगणसगणौ पुनरपि तावेव समायातस्तद् वृत्तं 'जलोद्धतगतिर्नाम' गद्यते । रसैः=षड्भिः, ऋतुभिः=षड्भिश्च यतिः । उदाहरणं यथा—

जगणः सगणः जगणः सगणः

। ऽ । । । ऽ । ऽ । । । ऽ

महीसु—रगणो, जडार्च—नतया

जगणः सगणः जगणः सगणः

। ऽ । । । ऽ । ऽ । । । ऽ

विमूढ़—धिषणः स्वधर्म—विमुखः ।

जगणः सगणः जगणः सगणः

। ऽ । । । ऽ । ऽ । । । ऽ

जलोद्ध – तगतो, रसात – लमवो

जगणः सगणः जगणः सगणः

। ऽ । । । ऽ । ऽ । । । ऽ

ययौ स्व–यमिम, समाज–मनयत् । ३४।

(दया० महा० १२।१२७)

तत नौ म्रौ ॥३५॥

यस्य पादे नगणौ मगण–रगणौ च लसतस्तद् वृत्तं 'तत' नाम विज्ञेयम् । उदाहरणं यथा –

नगणः नगणः मगणः रगणः

। । । । । । ऽ ऽ ऽ ऽ । ऽ

यदि न–रपति–माला सो–त्कण्ठया

नगणः नगणः मगणः रगणः

। । । । । । ऽ ऽ ऽ ऽ । ऽ

भवति विमल–कार्ये सा–हाय्यकृत् ।

नगणः नगणः मगणः रगणः

। । । । । । ऽ ऽ ऽ ऽ । ऽ

वयम–पि मुनि––हंसोद्यु—क्ता मुदा

नगणः नगणः मगणः रगणः

। । । । । । ऽ ऽ ऽ ऽ । ऽ

जगति पशुव-धं रोद्धुं सन्ततम् ॥३५॥

(दया० महा० १२।६८)

कुसुमविचित्रा न्यौ न्यौ ॥३६॥

यस्य पादे नगणयगणौ पुनरपि नगणयगणौ भवतस्तद् वृत्तं 'कुसुमविचित्रा' आख्यायते। उदाहरणं यथा—

नगणः यगणः नगणः यगणः

। । । । ऽ ऽ । । । । ऽ ऽ

विधिहृ—तगेहाः कृशत—रदेहाः

नगणः यगणः नगणः यगणः

। । । । ऽ ऽ । । । । ऽ ऽ

पितृसु—खहीना विपदि निलीनाः।

नगणः यगणः नगणः यगणः

। । । । ऽ ऽ । । । । ऽ ऽ

कुसुम—विचित्रा—लकग—णिकाभि—

नगणः यगणः नगणः यगणः

। । । । ऽ ऽ । । । । ऽ ऽ

द्विजकु—लबाला वशमु—पनीताः ॥

(दया० महा० १२।१२८)

अथ च—

नगणः यगणः नगणः यगणः

| | | | S S | | | | S S

नियमि— तकाला परिमि—तबाला

नगणः यगणः नगणः यगणः

| | | | S S | | | | S S

विरचि—तशाला विगलि— त–जाला।

नगणः यगणः नगणः यगणः

| | | | S S | | | | 8 8

जनय—ति चित्ते मुदम—यि ! पूर्णां

नगणः यगणः नगणः यगणः

| | | | S S | | | | S S

गुरुकु—लभूमिः कुसुम--विचित्रा ॥३६।

—इति कविवराखिलानन्दशर्मणः।

## चञ्चलाक्षिका नौ रौ ॥३७॥

यस्य पादे नगणौ रगणौ च भवतस्तद् वृत्तं 'चञ्चलाक्षिका' समुदीर्यते। उदाहरणं यथा—

नगणः नगणः रगणः रगणः

| | | | | | 8 | 8 S | S

अतिसु–रभिर- भाजि पु–ष्पश्रियाम्

नगणः नगणः रगणः रगणः

। । । । । । ऽ । ऽ ऽ । ऽ

बहुल—तरत—येव स—न्तानकः ।

नगणः नगणः रगणः रगणः

। । । । । । ऽ । ऽ ऽ । ऽ

तरुण—परभृ--तस्वनं सत्कवे-

नगणः नगणः रगणः रगणः

। । । । । । ऽ । ऽ ऽ । ऽ

रतनु--त रत--येव स--न्तानकः ॥३७॥

भुजङ्गप्रयातं यः ॥३८॥

यस्य पादे चत्वारो यगणा भवन्ति तद् वृत्तं 'भुजङ्गप्रयातं' नाम सम्पद्यते । उदाहरणं यथा—

यगणः यगणः यगणः यगणः

। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ

भुजङ्ग—प्रयातो—पमर्दु—श्चरित्रै-

यगणः यगणः यगणः यगणः

। ऽ ऽ । ऽ ऽ । ऽ ऽ ऽ । ऽ

स्त्यजेत्स—ङ्गतं स—न्ततं द—म्भिमित्रैः ।

यगणः यगणः यगणः यगणः

। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ

पवित्रै—रुदारा—शयैर्ब्र—ह्मविज्ञै-

यगणः यगणः यगणः यगणः

। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ

विदध्या—द्धितेच्छु—र्मनोज्ञे—तु कामः ।।

(दया० महा० १२।७२)

अथ च—

यगणः यगणः यगणः यगणः

। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ

विना ब्र—ह्मचर्यं न दे शा—धिदेवो

यगणः यगणः यगणः यगणः

। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ

विना ब्र—ह्मचर्यं न देवोऽ-स्ति किञ्चित् ।

यगणः यगणः यगणः यगणः

। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ

विना ब्र—ह्मचर्यं न देव—स्य सृष्टि-

यगणः यगणः यगणः यगणः

। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ

र्जना ब्र—ह्मचर्यं ततः पा—लयन्तु ।।

(ब्रह्मचर्यमहत्त्वे ११२ श्लोकः)

अपरञ्च—

यगण, यगण, यगण, यगण,

। S S । S S । S S । S S

अधर्म—स्य नाशे विशेषे—ण रक्तं

यगण: यगण: यगण: यगण।

। S S । S S । S S । S S

निराका—रभक्तं गुणेषु प्रसक्तम् ।

यगण: यगण: यगण: यगण:

। S S । S S । S S । S S

स्वधर्मे—ऽनुरक्तं सुखेभ्यो विरक्तं

यगण, यगण: यगण: यगण:

। S S । S S । S S । S S

भजेऽहं दयान—न्दमीड्यं मुनीशम् ।।

(कविवराखिलानन्दशर्मणः) ।।३८।।

स्रग्विणी रः ।।३९।।

यस्य पादे चत्वारो रगणा भवन्ति तद् वृत्तं 'स्रग्विणी' नाम निगद्यते । उदाहरणं यथा—

रगणः रगणः रगण, रगणः

S । S S । S S । S S । S

उत्तरा—सङ्गम—ङ्गेऽधुना—प्रावृणो-

रगणः रगणः रगणः रगणः

S I S S I S S I S S I S

दन्तरी – यं पदा—म्भोजयु—ग्मे दधौ ।

रगणः रगणः रगणः रगणः

S I S S I S S I S S I S

कम्बुर-म्यां चका–रात्मधीः कन्धरां

रगणः रगणः रगणः रगणः

S I S S I S S I S S I S

सुप्रभा—सुन्दर—स्फाटिक— स्रग्विणीम् ॥३९॥

(दया० महा० १२।६५)

प्रमिताक्षरा स्जौ सौ ॥४०॥

यस्य पादे सगणजगणौ सगणौ च विराजतस्तद् वृत्तं 'प्रमिताक्षरा' संज्ञायते । उदाहरणं यथा—

सगणः जगणः सगणः सगणः

I I S I S I I I S I I S

विदिता—क्षराम—लहृदो यमिनः

सगणः जगणः सगणः सगणः

I I S I S I I I S I I S

परिष—ज्जुषां सु—विदुषां हृदयम् ।

सगणः जगणः सगणः सगणः

।।S ।S। ।।S ।।S

प्रमिता-क्षरापि बहुभा-वमयी

सगणः जगणः सगणः सगणः

।S। ।S। ।।S ।।S

शिववाग् जहार मधुरा मृदुला ॥४०॥

(दया० महा० १२।६४)

कान्तोत्पीडा भ्मौ स्मौ ॥४१॥

यस्य पादे भगणमगणौ सगणमगणौ च शोभेते तद् वृत्तं 'कान्तोत्पीडा' निगद्यते । उदाहरणं यथा—

भगणः मगणः सगणः मगणः

S।। SSS ।।S SSS

शैलग-णव्याप्ता वनका-न्तोत्पीडा

भगणः मगणः सगणः मगणः

S।। SSS ।।S SSS

वारिधि-वत्कासा-रसुमो-द्यानाढ्या ।

भगणः मगणः सगणः मगणः

S।। SSS ।।S SSS

निर्झर-शोभागा-रविहा-रारामा

मगण: मगण: सगण: मगण:

S I I S S S I I S S S S

राजति रम्या स-म्प्रति का-श्मीरक्ष्मा ॥४१॥

वैश्वदेवी मौ याविन्द्रियऋषय: ॥४२॥

यस्य पादे मगणौ यगणौ च शोभेते तद् वृत्तं 'वैश्वदेवी' निगद्यते। इन्द्रियेषु=पञ्चषु, ऋषिषु=सप्तसु च यति:। उदाहरणं यथा—

मगण: मगण: यगण: यगण:

S S S S S S I S S I S S

सत्यज्ञा-नार्थी,क-र्मवीरो महात्मा

मगण: मगण: यगण यगण:

S S S S S S I S S I S S

वृन्दे सा-धूनां, वै श्वदेवो वरेण्य:।

मगण: मगण: यगण: यगण:

S S S S S S I S S I S S

नृणां क-ल्याणे,यो--गिवर्ये-ण कुम्भे

मगण: मगण: यगण: यगण:

S S S S S S I S S I S S

नैक: सं—लग्नोऽद-र्शि तेने-ति खिन्नम् ॥४२॥

(दया० महा० १२।१२५)

वाहिनी त्यौ म्यावृषिकामशराः ॥४३॥

यस्य पादे तगणयगणौ मगणयगणौ च शोभेते तद् वृत्तं 'वाहिनी' इत्याख्यायते। ऋषिभिः=सप्तभिः, कामशरैश्च पञ्चभिर्यतिः। उदाहरणं यथा—

तगणः यगण मगणः यगणः

S S I I S S S S S I S S

शक्ता ज-गतीं कृ-त्स्नां, जेतुं सुयोधा-

तगणः यगणः मगणः यगणः

S S I S S I S S S I S S

हस्त्यश्व—रथोदा—रा, सा वा—हिनी ते।

तगणः यगणः मगणः यगणः

S S I I S S S S S I S S

छन्ने र-जसा भा-नौ, यस्याः प्रयाणे

तगणः यगणः मगणः यगणः

S S I I S S S S S I S S

घस्रेऽपि निशाभ्रा—न्तिं धत्ते नृलोकः ॥४३॥

—इति स्फुटम्।

नवमालिनी न्जौ भ्याविति ॥४४॥

यस्य पादे नगण-जगण-भगण-यगणा विलसन्ति तद् वृत्तं

'नवमालिनी' नाम निगद्यते । "इति" इत्यध्यायपरिसमाप्तिद्योतक: ।
उदाहरणं यथा—

नगण: जगण: भगण: यगण:

। । । । ऽ । ऽ । । । ऽ ऽ

परवि—पदीक्ष—णेन न—यनास्त्रै-

नगण: जगण: भगण: यगण:

। । । । ऽ । ऽ । । । ऽ ऽ

हृदि न—वमालि—नीह क—रुणोर्मि: ।

नगण: जगण: भगण: यगण:

। । । । ऽ । ऽ । । । ऽ ऽ

प्रवह—ति कस्य—चिन्न ब—त साधो-

नगण: जगण: भगण: यगण:

। । । । ऽ । ऽ । । । ऽ ऽ

मुनिव—रमन्त—रेण नृ—दयार्द्रम् ।।४४।।

(दया० महा० १२।१२६)

इति श्रीमन्मुनिमेधाव्रताचार्यविरचितायां
व्रतिमङ्गलायां छन्द:सूत्रवृत्तौ
षष्ठोऽध्याय: ।।६।।

# * अथ सप्तमोऽध्यायः *

पूर्वस्मिन्नध्याये यतिनियमनोत्तरमेकाक्षरपादादुक्ताधिकारादारभ्य द्वादशाक्षरपादजगत्यधिकारपर्यन्तं तानि तानि वृत्तानि संवर्णितानि। इदानीमतिजगती शक्वर्यतिशक्वर्यष्टिरत्यष्टिर्धृतिरतिधृतिश्चेति सप्तातिच्छन्दांसि एकैकाक्षरवृद्धया क्रमेणोदाह्रियन्ते। तत्रातिजगत्याम्—

प्रहर्षिणी म्नौ ज्रौ ग् त्रिकदशकौ ॥१॥

यस्य पादे मगणनगणौ जगण-रगण-गकाराश्च विलसन्ति तद् वृत्तं प्रहर्षिणी इत्याख्यायते। त्रिभिर्दशभिश्च यतिः। उदाहरणं यथा—

मगणः नगणः जगणः रगणः गु.

S S S | | | | S | S | S S

योगीन्द्रा,-ननहि--मशैल---तः प्रभू-ना

मगणः नगणः जगणः रगणः गु.

S S S | | | | S | S | S S

गीर्गङ्गा, विबुध-मनः-प्र-हर्षिणी-यम्।

मगणः नगणः जगणः रगणः गु.

S S S | | | | S | S | S S

तैलङ्गा,-न्तरव-नभूमि-मार्द्दय-न्ती

मगणः नगणः जगणः रगणः गु.

S S S | | | | S | S | S S

नैर्मल्यात्, सुगुण-फलाञ्चि-तां वित-ने ॥१॥

(दया० महा० १२।३८)

रुचिरा ज्भौ स्जौ ग् चतुर्नवकौ ॥२॥

यस्य पादे जगणभगणौ सगणजगणौ गुरुश्चास्ति तद् वृत्तं 'रुचिरा' नाम प्रख्यायते। चतुर्भिर्नवभिश्च यतिः। उदाहरणं यथा—

जगणः भगणः सगणः जगणः गु.

| S | S | | | | S | S | S

व्रतीश्व-रो, व्रति-रुचिरा-ङ्गसौष्ठ-वः

जगणः भगणः सगणः जगणः गु.

| S | S | | | | S | S | S

स्मितान-न,स्त्रिद-शगिराऽऽलपन्मु-दा।

जगणः भगणः सगणः जगणः गु.

| S | S | | | | S | S | S

स योग-तो, मुनि-युगले-न योग-धीः

जगणः भगणः सगणः जगणः गु.

| S | S | | | | S | S | S

सतां मु-दं, ननु तनुते समाग-मः ॥२॥

(दया० महा० १२।३७)

मत्तमयूरं म्तौ य्सौ ग् समुद्रनवकौ ॥३॥

यस्य पादे मगण-तगण-यगण-सगण-गकारा द्योतन्ते तद् वृत्तं 'मत्तमयूरं' गीयते। चतुर्भिर्नवभिश्च यतिः। उदाहरणं यथा—

मगणः तगणः यगणः नगणः गु.

S S S S S I I S S I I S S

भद्रोर-स्को, दीर्घ-सुबाहु-र्वरभा-लो-

मगणः तगणः यगणः सगणः गु.

S S S S S I I S S I I S S

भद्रस्क-न्धो, मांस-लदेह -स्तनुवा -लः।

मगणः तगणः यगणः सगणः गु.

S S S S S I I S S I I S S

कम्बुग्री-वः शान्त-मुखेन्दु-र्मुनिच-न्द्रो-

मगणः तगणः यगणः सगणः गु.

S S S S S I I S S I I S S

गोष्ठ्यां रे-जे मत्त-मयूरा-म्बकर-म्यः ॥३॥

(दया० महा० १२।५३)

गौरी नौ न्सौ ग् ॥४॥

यस्य पादे नगणत्रयं सगणो गुरुश्च भाति तद् वृत्तं 'गौरी'

नाम गीयते। उदाहरणं यथा—

नगणः नगणः नगणः सगणः गु.
। । । । । । । । । । । ऽ ऽ
विहित—भुवन—मनुज—हितबो-धं

नगणः नगणः नगणः सगणः गु.
। । । । । । । । । । । ऽ ऽ
विभुव-रभज-नशमि-तविषा-दम्।

नगणः नगणः नगणः सगणः गु.
। । । । । । । । । । । ऽ ऽ
विजित—षडस—दरिनि—करवी-रं

नगणः नगणः नगणः सगणः गु.
। । । । । । । । । । । ऽ ऽ
नमति कविम-णिरिह यतिधी—रम् ॥४॥

अत्र शक्वर्याम्—

सम्बाधा म्तौ न्सौ गाविन्द्रियनवकै ॥५॥

यस्य पादे मगण—तगण—नगण—सगणा गकारौ च विभातस्तद् वृत्तम'सम्बाधा' नाम प्रोच्यते। पञ्चभि-र्नवभिश्च यतिः। उदाहरणं यथा—

मगणः तगणः नगणः सगणः गु. गु.

ऽऽऽ ऽऽ ।।।।।।ऽ ऽ ऽ

गङ्गारा-मोऽभूत्,सु-यशसि महितः प्रा-ज्ञो-

मगणः तगणः नगणः सगणः गु. गु.

ऽऽऽऽऽ। ।।।।।ऽ ऽ ऽ

योगी तं प्रोचे, वि-तरतु मम सा-हा-य्यम् ।

मगणः तगणः नगणः सगणः गु गु

ऽऽऽ ऽऽ । ।।।।।ऽ ऽ ऽ

गोरक्षा-यां सन्, कृ-षिरति-फलदा-श्री स्याद्

मगणः तगणः नगणः सगणः गु. गु.

ऽऽऽ ऽऽ । ।।। ।।ऽ ऽ ऽ

येनास-म्बाधा, क्र-तुकृति-रनिशं पु-ण्या ॥५॥

(दया० महा० १२।६६)

अपराजिता नौ र्सौ ल्गौ स्वरर्षयः ॥६॥

यस्य पादे नगणौ रगण-सगण-लकारा गकारश्च विद्यते तद् वृत्तं 'अपराजिता' नाम गद्यते। सप्तभिः सप्तभिश्च यतिः। उदाहरणं यथा—

नगणः नगणः रगणः सगणः ल. गु.

।।। ।।। ऽ।ऽ ।।ऽ । ऽ

परिष-दि कल-हं, विधा-तुमना य-यौ

नगणः नगणः रगणः सगणः ल. गु.

। । । । । । ऽ । ऽ । । ऽ । ऽ

परमि—यमतु—लं, मुनी—न्द्रमनो-व्र-लम् ।

नगणः नगणः रगणः सगणः ल. गु.

। । । । । । ऽ । ऽ । । ऽ । ऽ

नयन—पथम—लं, विधा—य पला-यि-ता

नगणः नगणः रगणः सगणः ल. गु.

। । । । । । ऽ । ऽ । । ऽ । ऽ

यतिति-लकत-तु,-र्जय-त्यपरा-जि-ता ॥६॥

(दया० महा० १२।५२)

प्रहरणकलिता नौ भ्नौ ल्गौ च ॥७॥

यस्य पादे नगणौ भगणनगणौ लकारो गकारश्चास्ति तद् वृत्तं 'प्रहरणकलिता' नाम जायते। चकारात् 'स्वरर्षय' इत्यनुकर्षणीयम्। तेन सप्तसु सप्तसु च यतिः। उदाहरणं यथा—

नगणः नगणः भगणः नगणः ल. गु.

। । । । । । ऽ । । । । । । ऽ

मुनिव—दवच—नैः, श्रुत—हरिच-रि-ता

नगणः नगणः भगणः नगणः ल. गु.

। । । । । । ऽ । । । । । । ऽ

निजम-तदुरि-त,-श्रव-णविकु-पि-ता ।

नगणः नगणः भगणः नगणः ल. गु.

। । । । । । ऽ । । । । । । ऽ

मधुरि–पुशर–णा, विक–लितक–र–णा

नगणः नगणः भगणः नगणः ल. गु.

। । । । । । ऽ । । । । । ऽ ऽ

प्रहर–ण कलि–ता, हरि–मतज–न–ता ॥

(दया० महा० १२।५१)

अथ च—

नगणः नगणः भगणः नगणः ल. गु.

। । । । । । ऽ । । । । । । ऽ

न भव–ति विदु–षां परि–षदि क–ल–हो–

नगणः नगणः भगणः नगणः ल. गु.

। । । । । । ऽ । । । । । । ऽ

न भव–ति यमि–नां परि–षदि वि–ष–यः।

नगणः नगणः भगणः नगणः ल. गु.

। । । । । । ऽ । । । । । । ऽ

न भव–ति धनि–नां परि–षदि वि–ध–नो-

नगणः नगणः भगणः नगणः ल. गु.

। । । । । । ऽ । । । । । । ऽ

न भव–ति गुणि–नां परि–षदि वि–गु–णः ॥७॥

—इति कविवराखिलानन्दशर्मणः ।

## वसन्ततिलका त्भौ जौ गौ ॥८॥

यस्य पादे तगण-भगणौ जगणौ गकारौ च राजेते तद्-वृत्तं 'वसन्ततिलका' सञ्ज्ञीयते। पादान्ते यतिः। उदाहरणं यथा—

तगण: भगण: जगण: जगण: गु. गु.

S S I S I I I S I I S I S S

यो ब्रह्म--चर्यनि—यतव्र—तपाल—ने—न

तगण: भगण: जगण: जगण: गु. गु.

S S I S I I I S I I S I S S

विद्यां गु–रो: सम–धिगच्छ–ति सोऽत्र लो-के।

तगण: भगण: जगण: जगण: गु. गु.

S S I S I I I S I I S I S S

विद्वद्व–रो भव–ति सोऽपि च शास्त्र--का–रो-

तगण: भगण: जगण: जगण: गु. गु.

S S I S I I I S I I S I S S

देहं वि–हाय प–रमं प--दमश्नु--तेऽ–न्ते ॥

(ब्रह्मचर्यशतके ५९ श्लोकः)

अथ च—

तगण: भगण: जगण: जगण: गु. गु.

S S I S I I I S I I S I S S

सा काम–धेनु-स- दृशी स- दृशोज—न–न्याः

तगणः भगणः जगणः जगणः गु. गु.

S S । S । । । S । । S । S S

सौख्यं द-दाति स-मये फ-लदायि-नी च ।

तगण। भगण। जगणः जगणः गु. गु.

S S । S । । । S । । S । S S

सन्तिष्ठ-ते स्वहृ-दये हृ-दयङ्ग-मे-यं

तगणः भगणः जगणः जगणः गु. गु.

S S । S । । । S । । S । S S

विद्यानि-शं प्रकु-रुते प्र-मुदं स-खे-व ।।८।।

(ब्रह्मचर्यशतके ५५ श्लोकः)

## सिंहोन्नता काश्यपस्य ।।९।।

इयमेव वसन्ततिलका काश्यपस्याचार्यस्य मतेन 'सिंहोन्नता' समाख्यायते । पूर्वप्रदत्तमेवोदाहरणम् ।।९।।

## उद्धर्षिणी सैतवस्य ।।१०।।

इयमेव वसन्ततिलका सैतवस्याचार्यस्य मते 'उद्धर्षिणी' नाम घोष्यते । पूर्वप्रदत्तमेवोदाहरणम् ।।१०।।

अत्रातिशक्वर्याम्—

## चन्द्रावर्ता नौ नौ स् ।।११।।

यस्य पादे नगणाश्चत्वारः सगणश्च विराजते तद्वृत्

'चन्द्रावर्ता समुच्यते। सप्तभिरष्टभिश्च यतिः। उदाहरणं यथा—

नगणः नगणः नगणः नगणः सगणः

। । । । । । । । । । । । । । ऽ

पटुज—वपव—न,चलि—तजल—लहरी

नगणः नगणः नगणः नगणः सगणः

। । । । । । । । । । । । । । ऽ

तरलि—तविह—ग,निव—हरव—मुखरम्।

नगणः नगणः नगणः नगणः सगणः

। । । । । । । । । । । । । । ऽ

विकसि—तकम—ल,सुर—भिशुचि—सलिलं

नगणः नगणः नगणः नगणः सगणः

। । । । । । । । । । । । । । ऽ

विलस—ति पथि—क,मन—सि शर—दि सरः ॥११॥

—इति महाकवेर्हलायुधस्य।

## मालर्तुनवकौ चेत् ॥१२॥

सैव चन्द्रावर्ता माला नाम प्रपद्यते यदा षष्ठे नवमे च वर्णे यतिः। उदाहरणं यथा—

नगणः नगणः नगणः नगणः सगणः

। । । । । । । । । । । । । । ऽ

बहुवि—धविष,—यविमु—खमति—सरलं

नगणः नगणः नगणः नगणः सगणः

। । । । ।। । ।। ।।।।s

परहि-त कर-ण,निर-तमघविरतम् ।

नगणः नगणः नगणः नगणः सगणः

।।। ।।। । ।। ।।। ।।s

नरव—रमखि—ल,सुज—नकृत—नमनं

नगणः नगणः नगणः नगणः सगणः

।।। ।।। । ।। ।।। ।।s

द्रुतमु—पसर,—ति सक—लगुण—निचयः ॥१२॥

—इति कविवराखिलानन्दशर्मणः ।

मणिगुणनिकरो वस्वृषयः ॥१३॥

सैव चन्द्रावर्ता मणिगुणनिकरो नाम विभर्ति यदाष्टभिः सप्तभिश्च यतिर्भवति । पूर्वोक्तमेवोदाहरणं ज्ञेयम् ॥१३॥

मालिनी नौ म्यौ य् ॥१४॥

यस्य पादे नगणौ मगणयगणौ यगणश्च भवति तद् वृत्तं 'मालिनी' नामोदीर्यते । अष्टभिः सप्तभिश्च यतिः । उदाहरणं यथा—

नगणः नगणः मगणः यगणः यगणः

। ।। ।।। ss s ।ss ।ss

विजित-रुचिर-काम, स-त्यकामं प्रकामं

नगणः नगणः मगणः यगणः यगणः

। । । । । । S S S । S S । S S

परम-परशु-रामं, ब्र-ह्मचर्या-भिरामम् ।

नगणः नगणः मगणः यगणः यगणः

। । । । । । S S S । S S । S S

द्विजस -रसिज—हंसं, वि— प्रवंशा-वतंसं

नगणः नगणः मगणः यगणः यगणः

। । । । । । S S S । S S । S S

प्रमद-नृपति-कालं, को न वेद-षिबालम् ॥

(ब्रह्मचर्यमहत्त्वे १३२ श्लोकः)

अथ च—

नगणः नगणः मगणः यगणः यगणः

। । । । । । S S S । S S । S S

ऋषिव-रकुल-दीपः, स-त्यधर्म-प्रदीपः

नगणः नगणः मगणः यगणः यगणः

। । । । । । S S S । S S । S S

सकल-मनुज-शिक्षा,-क्रा-न्तिकार्यै-कदक्षः ।

नगणः नगणः मगणः यगणः यगणः

। । । । । । S S S । S S । S S

निखिल-निगम-शङ्का,प-ङ्कनाश-प्रवीणः

नगणः नगणः मगणः यगणः यगणः

। । । । । । ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

सुमति-रुचिर-भास्वान्, भा-सयामा-स भूमिम् ।।

(ब्रह्म० विरजानन्दचरिते १।२८)

नगणः नगणः मगणः यगणः यगणः

। । । । । । ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

व्रतिगृ-हिमुनि-जीवन्, यु-क्तसंन्या-सिवर्यैं-

नगणः नगणः मगणः यगणः यगणः

। । । । । । ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

र्मनुज-जनिहि-तार्थं, य-त्र संन्या-तमार्यैः ।

नगणः नगणः मगणः यगणः यगणः

। । । । । । ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

विभुव-रशिव-सङ्गां, वे-दगङ्गां मुदाऽमूं

नगणः नगणः मगणः यगणः यगणः

। । । । । । ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

श्रयत गदति चैवं, दे-वसन्दे-शमन्त्रः ।।

(ईशोपनिषत्काव्ये २० श्लोकः)

अत्राष्टौ --

ऋषभगजविलसितं भ्रौ नौ नगौ स्वरनवकौ ।।१५।।

यस्य पादे भगण—रगणौ नगणास्त्रयो गकारश्च राजति

तद् वृत्तं 'ऋषभगजविलसितं' नाम गीयते सप्तभिर्नवभिश्च यतिः। उदाहरणं यथा—

भगणः रगणः नगणः नगणः नगणः गु.
S।। S।S ।।। ।।। ।।। S
आयत—बाहुद—ण्ड,मुप—चितपृ—थुहृद-यं

भगणः रगणः नगणः नगणः नगणः गु.
S।। S।S ।।। ।।। ।।। S
पीनक–टिप्रदे-श,मृष-भगज-विलसि–तम्।

भगणः रगणः नगणः नगणः नगणः गु.
S।। S।S ।।। ।।। ।।। S
वीरमु-दारस-त्त्व,मति-शयगु-णरसि–कं

भगणः रगणः नगणः नगणः नगणः गु.
S।। S।S ।।। ।।। ।।। S
श्रीरति–चञ्चला–पि, न प–रिहर-ति पुरु-षम्॥

—इति महाकवेर्हलायुधस्य।

अथ च—

भगणः रगणः नगणः नगणः नगणः गु.
S।। S।S ।।। ।।। ।।। S
यद्यपि कालए-ष विष–मितब–हुसुज–नः

भगणः रगणः नगणः नगणः नगणः गु.

s । । s । s । । । । । । । । । s

साम्प्रत-मागतोऽ-स्ति बहु-विधम-तनिच-यैः ।

भगणः रगणः नगणः नगणः नगणः गु.

s । । s । s । । । । । । । । । s

वैदिक-मार्ग ए-व ऋषि-मुनिकृ-तमहि-मो-

भगणः रगणः नगणः नगणः नगणः गु.

s । । s । s । । । । । । । । । s

भारत-वर्षमा-त्रमुप-नमय-ति मह-सा ॥१५॥

—इति कविवराखिलानन्दशर्मणः ।

अत्रात्यष्टौ—

हरिणी न्सौ म्रौ स्लौ गृतुसमुद्रऋषयः ॥१६॥

यस्य पादे नगण-सगण-मगण-रगण-सगण-लकार-गकाराश्च विलसन्ति तद् वृत्तं 'हरिणी' नाम भजते। षड्भिश्चतुर्भिः सप्तभिश्च यतिः। उदाहरणं यथा—

नगणः सगणः मगणः रगणः सगणः ल. गु.

। । । । । s s s s । s । । s । s

प्रकृति-जनितां, निर्वर्ण्यै-तां,गिरी-न्द्रसुचा-रु-तां

नगणः सगणः मगणः रगणः सगणः ल. गु.

। । । । । S S S S S । S । । S । S

व्रजति सहसा, सत्त्वाद्भि–न्नं, गुण-द्वयम-न्य-तः ।

नगणः सगणः मगणः रगणः सगणः ल. गु.

। । । । । S S S S S । S । । S । S

श्रयति हृदयं, सत्यं स–त्त्वं, गुणं लघु प–श्य–तां

नगणः सगणः मगणः रगणः सगणः ल. गु.

। । । । । S S S S S । S । । S । S

भवति च परं, चेतो म–ग्नं, मुदं–म्बुधिवी-चि-षु ॥

(प्रकृतिसौन्दर्ये १।३०)

अथ च—

नगणः सगणः मगणः रगणः सगणः ल. गु.

। । । । । S S S S S । S । । S । S

सकल–जनता,–श्रेयोया–न समु–न्नतिप–र्व-तं

नगणः सगणः मगणः रगणः सगणः ल. गु.

। । । । । S S S S S । S । । S । S

पुरुष–मणयो, जायन्ते ये निनी–षव उ–ज्ज्व–लाः ।

नगणः सगणः मगणः रगणः सगणः ल. गु.

। । । । । S S S S S । S । । S । S

सुगुण–निकर, तेषां ता–दृग्, दध–न्निजशै–श–वे

नगणः सगणः मगणः रगणः सगणः ल. गु.

। । । । । ऽ ऽ ऽ ऽ ऽ । ऽ । । ऽ । ऽ

जगति जयति, ब्रह्मान-न्दं, प्रलि-प्सुरयं ब-टुः ॥

(दया० महा० ४।८५)

पृथ्वी ज्सौ ज्सौ य्लौ ग् वसुनवकौ ॥१७॥

यस्य पादे जगणसगणौ पुनर्जगणसगणौ यगण-लकार-गकाराश्च शोभन्ते तद् वृत्तं 'पृथ्वी' नाम संगीयते। अष्टभिर्नवभिश्च यतिः। उदाहरणं यथा—

जगणः सगणः जगणः सगणः यगणः ल. गु

। ऽ । । । ऽ । ऽ । । । ऽ । ऽ ऽ । ऽ

भवात-पनिपी-डिता न्त-र-विलो-चनान-न्द-नो-

जगणः सगणः जगणः सगणः यगणः ल गु

। ऽ । । । ऽ । ऽ । । । ऽ । ऽ ऽ । ऽ

लसद्गु-णकलः सुक,र्म-कुमुदा-वलीमो-द-नः।

जगणः सगणः जगणः सगणः यगणः ल. गु.

। ऽ । । । ऽ । ऽ । । । ऽ । ऽ ऽ । ऽ

सदाखि-लजनान् सुवे,द-वचना-मृतं पा-य-यन्

जगणः सगणः जगणः सगणः यगणः ल. गु.

। S । । । S । S । । । S । S S । S

मुदं वि–तनुतां मुनी,न्द्र ! तव स–द्‌यशश्च–न्द्र–माः ॥

(दयानन्दलहर्याम् ४८ श्लोकः)

वंशपत्रपतितं भ्रौ न्भौ न्लौ ग् दिग्गृषयः ॥१८॥

यस्य पादे भगण–रगण–नगण–भगण–नगण–लकार–गकारा विलसन्ति तद् वृत्तं 'वंशपत्रपतितं' गीयते। दशभिः सप्तभिश्च यतिः। उदाहरणं यथा—

भगणः रगणः नगणः भगणः नगणः ल. गु.

S । । S । S । । । S । । । । । । S

अद्य कु–रुष्व क–र्म सुकृ–तं, यद—-परदि–व–से

भगणः रगणः नगणः भगणः नगणः ल. गु.

S । । S । S । । । S । । । । । । S

मित्र ! वि–धेयम–स्ति भव–तः, किमु चिरय–सि तत् ?

भगणः रगणः नगणः भगणः नगणः ल. गु.

S । । S । S । । । S । । । । । । S

जीवित–मल्पका–लकल–ना,लघु–तरत–र–लं

भगणः रगणः नगणः भगणः नगणः ल. गु.

S | | S | S | | | S | | | | | | S

नश्यति वंशप-त्रपति-तं, हिम-सलिल-मि-व ॥१८॥

-इति महाकवेर्हलायुधस्य।

मन्दाक्रान्ता म्भौ न्तौ त्गौ ग् समुद्रर्तुस्वराः ॥१९॥

यस्य पादे मगणभगणनगणास्तगणौ गकारौ च शोभेते तद् वृत्तं 'मन्दाक्रान्ता' नामोदीर्यते। चतुर्षु षट्सु सप्तसु च यतिः। उदाहरणं यथा—

मगणः भगणः नगणः तगणः तगणः गु. गु.

S S S S | | | | | S S | S S | S S

रामस्ने-हिप्रथि-तगुरु-राडाग- तो.भूतपु-रेऽ- स्मि-

मगणः भगणः नगणः तगणः तगणः गु. गु.

S S S S | | | | | S S | S S | S S

न्नाहूतोऽ-यं निग-मविदु-षा वाद-युद्धाय धू-र्तः।

मगणः भगणः नगणः तगणः तगणः गु. गु.

S S S S | | | | | S S | S S | S S

नानाव्या-जैरप-सृत इ-तो वाद-भीरया स नू-नं

मगणः भगणः नगणः तगणः तगणः गु. गु.

S S S S I I I I I S S I S S I S S

मन्दाक्रा–न्ता भर–तवसु–धा शोच्य–तां हा ग-ते–यम् ॥१९॥

(दया० महा० १२।४१)

शिखरिणी य्मौ न्सौ भ्लौ ग् ऋतुरुद्राः ॥२०॥

यस्य पादे यगण–मगण–नगण–सगण–भगण–लकार–गकाराश्च शोभन्ते तद् वृत्तं शिखरिणी नाम राजते। षट्स्वेकादशसु च यतिः। उदाहरणं यथा—

यगणः मगणः नगणः सगणः भगणः ल. गु.

I S S S S S I I I I I S S I I I S

समग्र–प्रान्तानां, विविध–नगरे–भ्यो वृष-धि-यो-

यगणः मगणः नगणः सगणः भगणः ल. गु.

I S S S S S I I I I I S S I I I S

जटीन्द्रा मुण्डीशा, विहित–यति-वे–शा अपि प- रे।

यगणः मगणः नगणः सगणः भगणः ल. गु.

I S S S S S I I I I I S S I I I S

क्षितीशा राजन्या, विमल–हृदया योगिन इ–तो-

यगण: मगण: नगण: सगण: भगण। ल. गु

। S S S S S । । । । । S S । । । S

गिरेर्गां मुक्त्वायु:, प्रकृति-ललितां तां शिख-रि-णीम् ॥२०॥

(दया० महा० १२।८६।

अत्र धृत्याम् –

कुसुमितलतावेल्लिता म्तौ न्यौ याविन्द्रियर्तुस्वराः ॥२१॥

यस्य पादे मगण—तगण—नगण—यगणा यगणौ च भवतस्तद् वृत्तं 'कुसुमितलतावेल्लिता' नाम निगद्यते। पञ्चसु षट्सु सप्तसु च यतिः। उदाहरणं यथा—

मगण: तगण: नगण: यगण: यगण! यगण:

S S S S S । । । । । S S । S S । S S

पुण्यार-ण्यानी, कु-सुमित-लता,वे-ल्लितान्ता समन्ताद्-

मगण। तगण। नगण। यगण: यगण। यगण:

S S S S S । । । । । S S । S S । S S

वासन्ती लक्ष्मी,-र्गि-रिपरि-सरे, सं-न्तताना-त्मलीलाम्।

मगण: तगण: नगण: यगण: यगण: यगण:

S S S S S । । । । । S S । S S । S S

सप्तस्त्रो-तोऽके, प्र-वरव-रणाः, प-र्णशाला दशास्यां

मगणः तगणः नगणः यगणः यगणः यगणः

S S S S S I I I I I S S I S S I S S

मुक्तात्मा योगी, ज–नहित–मनाः, का–रयित्वा न्यवात्सीत् ॥२१॥

(दया० महा० १२।८७)

अत्रातिधृतौ—

शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्यऋषयः ॥२२॥

यस्य पादे मगण-सगणौ जगण–सगणौ तगणौ गकारश्च विभाति तद् वृत्तं 'शार्दूलविक्रीडितं' नाम भाष्यते। द्वादशभिः सप्तभिश्च यतिः। उदाहरणं यथा—

मगणः सगणः जगणः सगणः तगणः तगणः गु.

S S S I I S I S I I I S S S I S S I S

पृथ्वीसिं—हनरे —न्द्रदुर्म—दबुधो,द्दामद्वि- पालीव-चः

मगणः सगणः जगणः सगणः तगणः तगणः गु.

S S S I I S I S I I I S S S I S S I S

शुण्डाद–ण्डविख–ण्डने क–लहिनां, पाखण्डि–नां मण्ड- ले।

मगणः सगणः जगणः सगणः तगणः तगणः गु.

S S S I I S I S I I I S S S I S S I S

दम्भेहा–मृगम–र्दनेऽनृ–तजुषां, गोमायु-कल्पात्म–नां

मगणः सगणः जगणः सगणः तगणः तगणः गु.

S S S | | S | S | | | S S S | S S | S

विद्रावे जयति प्रचण्ड-यतिराट्, शार्दूल-विक्रीडि-तम् ॥२२॥
(दया० महा० १२।४४)

अत्र कृतौ—

सुवदना म्रौ भ्नौ य्भौ ल्गावृषिस्वरर्तवः ॥२३॥

यस्य पादे मगण-रगण-भगण-नगण-यगण-भगण-लकार-गकारा विलसन्ति तद् वृत्तं 'सुवदना' नाम जेगीयते। सप्तसु सप्तसु षट्सु च यतिः। उदाहरणं यथा—

मगणः रगणः भगणः नगणः यगणः भगणः ल. गु.

S S S S | S S | | | | | | S S S | | | S

कामं का-मेन्धनं तत्, कथ-मजय-दहो, यो-गीन्द्र! म-द-नं

मगणः रगणः भगणः नगणः यगणः मगणः ल. गु.

S S S S | S S | | | | | | S S S | | | S

जग्धं दि-व्यौषधं द्राङ्, मद-यति हृ-दयं, स-न्नित्युद-गृ-णात्

मगणः रगणः भगणः नगणः यगणः भगणः ल. गु.

S S S S | S S | | | | | | S S S | | | S

कुयदि-कान्तवा-सं, प्रण-वरत-मना, नृ-त्याद्यनु-चि-तं

मगणः रगणः भगणः नगणः यगणः भगणः ल. गु.

S S S S । S S । । । । । । S S S । । । S

दृश्यं प-श्येन्न धी-मा,नपि न च म-नसा,ध्ये-या सुव-द-ना ॥२३॥
(दया० महा० १२।७०)

## गिलति वृत्तम् ॥२४॥

यस्य पादे गकार-लकाराः क्रमशो भवन्ति तद् वृत्तं 'वृत्तं' नाम निगद्यते। कृतिप्रकरणेन यावद्भिरेव विंशत्यक्षराणि पूर्यन्ते तावतां ग्लां ग्रहणम्। उदाहरणं यथा—

(२०)

S । S । S । S । S । S । S । S । S । S ।

स्वापतोऽधिकात्तु मङ्गलानमङ्गलान् विलोकयेन्नृचन्द्र !

(२०)

S । S । S । S । S । S । S । S । S । S ।

गोचराननारतं ततो दिवानिशं तदोम्पदं जपन्तु।

(२०)

S । S । S । S । S । S । S । S । S । S ।

संविशेत्सुनिद्रया-वृतोऽथ बुद्धवान् निषद्य भद्रकारि

(२०)

S । S । S । S । S । S । S । S । S । S ।

भक्तितः पुनर्जपेत् स वृत्तमस्त्यदः प्रशस्तमित्यगादि ॥२४॥
(दया० महा० १२।७३

अत्र प्रकृतौ—

स्रग्धरा म्रौ भ्नौ यौ य् त्रिः सप्तकाः ॥२५॥

यस्य पादे मगण—रगण—भगण—नगणास्त्रयश्च यगणा विराजन्ते तद् वृत्तं 'स्रग्धरा' नाम संगीयते सप्तसु सप्तसु सप्तसु च यतिः। उदाहरणं यथा—

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

S S S S | S S | | | | | | S S | S S | S S

गङ्गारा-मेण पृ-ष्टः, प्रमु-दितम-नसो, दि्द-श्य भस्मा-भ्रकं स-

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

S S S S | S S | | | | | | S S | S S | S S

ब्रह्मान-न्दाब्धिहं-सो, विम-लगुण-मणि, स्र-ग्धरार्या-वतंसः ।

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

S S S S | S S | | | | | | S S | S S | S S

कृष्णं भ-स्माभ्रकं त, न्निज-निकट-गतं, द-र्शयामा-स कृत्स्नं

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

S S S S | S S | | | | | | S S | S S | S S

दत्तं त-स्मै यथे-ष्टं, स्थवि-रजन-तनौ, यौ-वनौजः प्रदायि ॥

(दया० महा० १२।६६)

तत्राकृतौ—

मद्रकं भ्रौ न्रौ न्रौ न्गौ दिगादित्याः ॥२६॥

यस्य पादे भगण-रगणौ नगण-रगणौ भूयोऽपि नगण-रगणौ नगणो गकारश्च विलसति तद् वृत्तं 'मद्रकं' नाम समुदीर्यते। दशभिर्द्वादशभिश्च यतिः। उदाहरणं यथा—

भगणः रगणः नगणः रगणः नगणः रगणः नगणः गु.

S I I S I S I I I S I S I I I S I S I I I S

मन्मथ-वासनां जयति यो,भवा-म्बुधिज-यातना-परिच्चि-तः

भगणः रगणः नगणः रगणः नगणः रगणः नगणः गु.

S I I S I S I I I S I S I I I S I S I I I S

पावन-भक्तिपू-र्णहृद-यो, जिते-न्द्रियत-या परे-शनिर-तः।

भगणः रगणः नगणः रगणः नगणः रगणः नगणः गु.

S I I S I S I I I S I S I I I S I S I I I S

मद्रक-तीर्थम-न्त्रजप-नै रन-न्तसुख-बोधजा-तपुल-को-'

भगणः रगणः नगणः रगणः नगणः रगणः नगणः गु.

S I I S I S I I I S I S I I I S I S I I I S

मुक्तिप-दं स मृ-त्युविज-यी, मुनी-श्वर इ-वाप्नुयात् सुकृत-वान् ॥२६॥

(दया० महा० १२।७४)

तत्र विकृतौ—

अश्वललितं न्जौ भ्जौ भ्जौ भ्लौ ग् रुद्रादित्याः ॥२७॥

यस्य पादे नगण-जगणौ भगण-जगणौ भूयोऽपि भगण-जगणौ भगणो लकार-गकारौ च लसतस्तद् वृत्तम् 'अश्वललितं' नाम निगद्यते। एकादशभिर्द्वादशभिश्च यतिः। उदाहरणं यथा—

नगणः जगणः भगणः जगणः भगणः जगणः भगणः ल. गु.

। ।। ।ऽ। ऽ।। ।ऽ। ऽ।। ।ऽ। ऽ।। । ऽ

अनिश–मनन्त–मेकम–जरं, वि–लोकय–ति यो भ–वेऽत्र स–क–ले

नगणः जगणः भगणः जगणः भगणः जगणः भगणः ल. गु.

।।। ।ऽ। ऽ।। ।ऽ। ऽ।। ।ऽ। ऽ।। । ऽ

निगम–विधान–मेव कु–रुते, प–रोपक–रणाय यो नर–व–रः।

नगणः जगणः भगणः जगणः भगणः जगणः भगणः ल. गु

।।। ।ऽ। ऽ।। ।ऽ। ऽ।। ।ऽ। ऽ। ।। ऽ

सकल–मपास्य मोहक–लनं, वि–शोधित–मना य–मेन नि–त–रां

नगणः जगणः भगणः जगणः भगणः जगणः भगणः ल. गु.

।।। ।ऽ।ऽ ।। ।ऽ। ऽ।। ।ऽ। ऽ।।। ऽ

परम–सुखेन सोऽत्र र–मते, वि–डम्बन–मितो य–दन्यद–प–रम् ॥२७॥

—इति कविवराखिलानन्दशर्मणः।

मत्ताक्रीडा मौ त्नौ नौ न्लौ ग् वसुपञ्चदशकौ ॥२८॥

यस्य पादे मगणौ तगणो नगणाश्चत्वारो लकार-गकारौ च शोभेते तद् वृत्तं 'मत्ताक्रीडा' नाम संगिरन्ते। अष्टभिः पञ्चदशभिश्च यतिः। उदाहरणं यथा—

मगणः मगणः तगणः नगणः नगणः नगणः नगणः ल. गु.

S S S S S S S S । । । । । । । । । । । । । । S

भो भो लो–का यूयं सर्वे, प–रधन–परज–नहर–णमघ–मि–ति

मगणः मगणः तगणः नगणः नगणः नगणः नगणः ल गु.

S S S S S S S S । । । । । । । । । । । । । । S

ज्ञात्वा शी–घ्र त्यक्तु सन्धां, कु–रुत न पुनरि–दमह–ह ! वित–नु–त।

मगणः मगणः तगणः नगणः नगणः नगणः नगणः ल. गु.

S S S S S S S S । । । । । । । । । । । । । । S

यद् यत्पा–पं तत् तत् सर्वं, य–दत्र्रि–निजह्–दि विष–यविष–यि–ता

मगणः मगणः तगणः नगणः नगणः नगणः नगणः ल. गु.

S S S S S S S S । । । । । । । । । । । । । । S

सर्वान्तःस्थं देवं मत्वा, त–दवधि विजह–त मम वचन-मि-दम् ॥२८॥

–इति कविवराखिलानन्दशर्मणः।

अत्र संस्कृतौ—

तन्वी भ्तौ न्सौ भौ न्याविन्द्रियस्वरमासाः ॥२६॥

यस्य पादे भगण-तगणौ नगण-सगणौ भगणौ नगण-यगणौ च विलसतस्तद् वृत्तं 'तन्वी' नामाख्यायते। पञ्चसु सप्तसु द्वादशसु च यतिः। उदाहरणं यथा—

भगणः तगणः नगणः सगणः भगणः भगणः नगणः यगणः
S I I S S I I I I I I S S I I S I I I I I I S S
निर्झरि-णी सुन्द-रतरु-विपिना, पर्वत-राजशि-खरग-तरम्या,

भगणः तगणः नगणः सगणः भगणः भगणः नगणः यगणः
S I I S S I I I I I I S S I I S I I I I I I S S
भीममृ-गेन्द्र,द्वि-पनृप-बहुला, स्वच्छस-रोवर-निकर-वरेण्या।

भगणः तगणः नगणः सगणः भगणः भगणः नगणः यगणः
S I I S S I I I I I I S S I I S I I I I I I S S
तुङ्गम-हेन्द्राल-यकल-शरुचा, शोभित-राजप-थरुचि-रगेहा

भगणः तगणः नगणः सगणः भगणः भगणः नगणः यगणः
S I I S S I I I I I I S S I I S I I I I I I S S
बालक-लीला,गृ-हकुसु-मलता, श्रीशिम-ला विल-सति सु-खदालम् ॥२६॥

अत्राभिकृतौ—

कौञ्चपदा भ्मौ स्भौ नौ नौ ग् भूतेन्द्रियवस्वृषयः ॥३०॥

यस्य पादे भगण—मगणौ सगण—भगणौ नगणाश्चत्वारो गकारश्च शोभते तद् वृत्तं 'कौञ्चपदा' नाम निगद्यते। पञ्चभिः पञ्चभिरष्टभिः सप्तभिश्च यतिः। उदाहरणं यथा—

भगणः मगणः सगणः भगणः नगणः नगणः नगणः नगणः गु.

S I I S S S I I S S I I I I I I I I I I I I I I S

यः सम-दृष्टिः, स-र्वहितै-षी, शुभ-कृतिर-नुदिन,-मतिदृ-ढनिय-मः

भगणः मगणः सगणः भगणः नगणः नगणः नगणः नगणः गु.

S I I S S S I I S S I I I I I I I I I I I I I I S

पुत्रस-मानं, दी-नविला-पं, जग-दिदम-धिकृति,-बहुवि-पदसि-तम्।

भगणः मगणः सगणः भगणः नगणः नगणः नगणः नगणः गु.

S I I S S S I I S S I I I I I I I I I I I I I I S

वैदिक-मन्त्रै,रु-त्तमभा-वै,र्लघु-तरम-ति-सुख,-गतम-धिकमु-दं

भगणः मगणः सगणः भगणः नगणः नगणः नगणः नगणः गु.

S I I S S S I I S S I I I I I I I I I I I I I I S

सत्वर-मीहेत् सोऽत्र निषे-व्यो ध्रुव-मिह नि-रवधि सुखम-भिलषता ॥३०॥

—इति कविवराखिलानन्दशर्मणः।

अत्रोत्कृतौ—

भुजङ्गविजृम्भितं मौ त्नौ नौ र्सौ ल्गौ वसुरुद्रऋषयः॥३१॥

यस्य पादे मगणौ तगण–नगणौ नगणौ रगण–सगणौ लकार-गकारौ च राजेते तद् वृत्तं 'भुजङ्गविजृम्भितं' नाम प्रोच्यते। अष्टभिरेकादशभिः सप्तभिश्च यतिः। उदाहरणं यथा—

मगणः मगणः तगणः नगणः नगणः नगणः रगणः सगणः ल.गु.

S S S S S S S S । । । । । । । । । । । S । S । । S । S

ये सन्न–द्धानेका–नीकै, र्न–रतुर-ग करि-परिवृ-तैः, समं तव श-त्र-वो,

मगणः मगणः तगणः नगणः नगणः नगणः रगणः सगणः ल. गु.

S S S S S S S S । । । । । । । । । । । S । S । । S । S

युद्धश्र-द्धालुब्धा-त्मान,स्त्व-दभिमु-खमप-गतभि-यः पत-न्ति धृता-युधाः।

मगणः मगणः तगणः नगणः नगणः नगणः रगणः सगणः ल. गु.

S S S S S S S S । । । । । । । । । । । S । S । । S । S

ते त्वां दृ-ष्ट्वा संग्रा-माग्रे,नृ-पतिव-र! कृप-णमन-सश्चल-न्ति दिग-न्त-रं

मगणः मगणः तगणः नगणः नगणः नगणः रगणः सगणः ल. गु.

S S S S S S S S । । । । । । । । । । । S । S । । S । S

किं वा सोढुं शक्यं भेकै र्ब-हुभिर-पि सवि-षविष-मं भुज-ङ्गविजृ-म्भित-तम् ॥३१॥

इति महाकवेर्हलायुधस्य।

अपवाहको म्नौ नौ नौ न्सौ गौ नवर्तुरसेन्द्रियाणि ॥३२॥

यस्य पादे मगणो नगणाः षट् सगणो गकारौ च विलसतस्तद् वृत्तम् 'अपवाहको' नाम भजते। नवसु षट्सु षट्सु पञ्चसु च यतिः। उदाहरणं यथा—

मगणः नगणः नगणः नगणः नगणः
ऽऽऽ ।।। ।।। ।।। ।।।
सर्वज्ञं सकल—निलय,—ममर—मजर,-

नगणः नगणः सगणः गु. गु.
।।। ।।। ।।ऽ ऽ ऽ
मभय—मतनु, —मखिला—न—न्दं,

मगणः नगणः नगणः नगणः नगणः
ऽऽऽ ।।। ।।। ।।। ।।।
सर्वेशं यजन—जपन,—मनन—तपन,-

नगणः नगणः सगणः गु. गु.
।।। ।।। ।।ऽ ऽ ऽ
जनन—मरण,—विषया—ध्य—क्षम्।

मगणः नगणः नगणः नगणः नगणः
ऽऽऽ ।।। ।।। ।।। ।।।
सर्वत्र प्रथित—मगम,—निगम—सुगम,-

नगणः नगणः सगणः गु. गु.

। । । ।।। । । ऽ ऽ ऽ

मतिभि—रहह, मुनिभि—र्दृ—श्यं,

मगणः नगणः नगणः नगणः नगणः

ऽ ऽ ऽ ।।। ।।। ।।। ।।।

प्रत्यक्षं नमत यजत, भजत जपत,

नगणः नगणः नगणः गु. गु.

।।। ।।। ।। ऽ ऽ ऽ

कुरुत विहित,—मिति मे वा—क्यम् ॥३२॥

—इति कविवराखिलानन्दशर्मणः।

इति कृतयः समाप्ताः।

---

इदानीं दण्डकजातयः कथ्यन्ते—

दण्डको नौ रः ॥३३॥

यस्य पादे द्वौ नगणौ रगणाश्च सप्त विलसन्ति 'दण्डको' नाम स संगीयते। उत्कृतेः षड्विंशत्यक्षरायाः समनन्तरं दण्डकस्य पाठात् सप्तविंशत्यक्षरत्वमेव युक्तम्। सर्वेषां छन्दसामेकैकाक्षरवृद्ध्या प्रवर्तनात्। इत ऊर्ध्वं पुनरेकैकवृद्ध्या प्रस्तारः। दण्डको नौ र इति श्रवणात् पादान्ते यतिः। उदाहरणं यथा—

नगणः नगणः रगणः रगणः रगणः

। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ

इह हि भवति दण्डका—रण्यदे—शे स्थितिः

रगणः रगणः रगणः रगणः

ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ

पुण्यभा— जां मुनी—नां मनो—हारिणी

नगणः नगणः रगणः रगणः रगणः

। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ

त्रिदश—विजयि—वीर्यह—व्यद्दश—ग्रीवल-

रगणः रगणः रगणः रगणः

ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ

क्ष्मीविरा—मेण रा—मेण सं—सेविते ।

नगणः नगणः रगणः रगणः रगणः

। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ

जनक-यजन—भूमिस—म्भूतसी—मन्तिनी-

रगणः रगणः रगणः रगणः

ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ

सीमसी—तापद—स्पर्श —पू—ताश्रमे

नगणः नगणः रगणः रगणः रगणः

। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ

भुवन–नमित–पादप–द्माभिधा–नम्बिका

रगणः रगणः रगणः रगणः

ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ

तीर्थया—त्रागता—नेकसि—द्धाकुले ॥३३॥

इति महाकवेर्हलायुधस्य ।

प्रथमश्चण्डवृष्टिप्रपातः ॥३४॥

यः सप्तविंशत्यक्षरपादः प्रथमो दण्डकः स 'चण्डवृष्टिप्रपातो' नाम विज्ञेयः। पूर्वोक्तमेवोदाहरणम् ॥३४॥

अन्यत्र रातमाण्डव्याभ्याम् ॥३५॥

रातमाण्डव्याभ्यामृषिभ्यामन्यत्रास्याभिधानमेतदेव विद्यते। ताभ्यां पुनरन्यैव संज्ञा कृतास्य वृत्तस्य। रातमाण्डव्यग्रहणं पूजार्थम् ॥३५॥

शेषः प्रचित इति ॥३६॥

इतश्चण्डवृष्टिप्रपातादूर्ध्वं दण्डकप्रस्तारः प्रचित इति संज्ञां लभते। पूर्वमेकैकाक्षरक्रमेणच्छन्दसां वृद्धिरुदीरिता, इदानीं तु रेफोपलक्षिताक्षरत्रयेण वृद्धिः। इतिकारोऽध्यायावसानार्थः। पादान्ते यतिः। उदाहरणं यथा—

नगणः नगणः रगणः रगणः रगणः

। । । । । । S । S S । S S । S

प्रथम–कथित–दण्डक–श्चण्डवृ–ष्टिप्रपा–

रगणः रगणः रगणः रगणः रगणः

S । S S । S S । S S । S S । S

ताभिधा–नो मुनेः पिङ्गला–चार्यना–म्नो मतः,

नगणः नगणः रगणः रगणः रगणः

। । । । । । S । S S । S S । S

प्रचित इति त–तः परं दण्डका–नामियं

रगणः रगणः रगणः रगणः रगणः

S । S S । S S । S S । S S । S

जातिरे–कैकरे–फाभिवृ–द्धया यथे–ष्टं भवेत् ।

नगणः नगणः रगणः रगणः रगणः

। । । । । । S । S S । S S । S

स्वरुचि–रचित–संज्ञया तद्विशे–षैरशे–

रगणः रगणः रगणः रगणः रगणः

S । S S । S S । S S । S S । S

षैः पुनः काव्यम–न्येऽपि कु–र्वन्तु वा–गीश्वराः,

नगणः नगणः रगणः रगणः रगणः

। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ

भवति यदि स-मानस-ङ्ख्याक्षरै-र्यत्र पा-

रगणः रगणः रगणः रगणः रगणः

ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ

दद्वय-स्था ततो दण्डकः पूज्यतेऽसौ जनैः ॥

इति दण्डकाः समाप्ताः ।

इति श्रीमन्मुनिमेधाव्रताचार्यरचितायां
व्रतिमङ्गलायां छन्दःसूत्रवृत्तौ
सप्तमोऽध्यायः ॥७॥

# * अथ अष्टमोऽध्यायः *

अत्रानुक्तं गाथा ॥१॥

अत्र शास्त्रे नामाभिधानग्रहणेन यन्नोक्तं छन्दः, प्रयोगे च वीक्ष्यते तद् 'गाथा' नाम्ना प्रत्येतव्यम्। तत्र त्रिष्टुभि -

कुड्मलदन्ती भ्तौ न्गौ गिन्द्रियरसाः ॥२॥

यस्य पादे भगण—तगणौ नगणो गकारौ च भवतस्तद् वृत्तं 'कुड्मलदन्ती' नाम संगीयते। पञ्चभिः षड्भिश्च यतिः। उदाहरणं यथा—

भगणः तगणः नगणः गु. गु.

S I I S S I I I I S S

या वर—योषा, नि—गमवि—दु—ष्यः,

भगणः तगणः नगणः गु. गु.

S I I S S I I I I S S

कुड्मल—दन्त्यः, कु—लयुग—भू—षाः।

भगणः तगणः नगणः गु. गु.

S I I S S I I I I S S

ता मति—हीनै,-र्द्वि—जकुल—द—र्पैं,-

भगणः तगणः नगणः गु. गु.

S I I S S I I I I S S

र्दीनद—शां हा, ख—लु लघु नी-ताः ॥२॥

(दया० महा० १२।१२४)

तत्र जगत्याम्—

वरतनुर्नजौ ज्रौ षड्रसाः ॥३॥

यस्य पादे नगण-जगणौ जगण-रगणौ च भवतस्तद् वृत्तं 'वरतनु'र्नाम निगद्यते। षड्भिः षड्भिश्च यतिः। उदाहरणं यथा—

नगणः जगणः जगणः रगणः

I I I I S I I S I S I S

अयि वि—जहीहि, जडाति—पूजनं

नगणः जगणः जगणः रगणः

I I I I S I I S I S I S

कुरु नि-गमोक्त,-दिशेश-चिन्तनम्।

नगणः जगणः जगणः रगणः

I I I I S I I S I S I S

मनुज—वपुस्त,—व मुक्ति—मन्दिरं

नगणः जगणः जगणः रगणः

I I I I S I I S I S I S

वरत-नुमेव,-मये! वि-नाशयेः ॥३॥

जलधरमाला म्भौ स्मौ समुद्रवसवः ॥४॥

यस्य पादे मगण-भगणौ सगण-मगणौ च विराजेते तद् वृत्तं 'जलधरमाला' नाम संगिरन्ते। चतुर्भिरष्टभिश्च यतिः। उदाहरणं यथा—

मगणः भगणः सगणः मगणः

S S S S I I I I S S S S

धत्ते शो-भां, कुव-लयदा-म्नः श्यामा

मगणः भगणः सगणः मगणः

S S S S I I I I S S S S

शैलोत्स-ङ्गे, जल-धरमा-ला लीना।

मगणः भगणः सगणः मगणः

S S S S I I I I S S S S

विद्युल्ले-खा, कन-ककृता-लङ्कारा

मगणः भगणः सगणः मगणः

S S S S I I I I S S S S

क्रीडासु-प्ता, शिशु-रिव मा-तुः क्रोडे ॥४॥

—पदानि परिवर्त्य महाकवेर्हलायुधस्य।

## गौरी नौ रौ ॥५॥

यस्य पादे नगणौ रगणौ च विलसतस्तद् वृत्तं 'गौरी' नामेति गाथा गीयते। पादान्ते यतिः। उदाहरणं यथा—

नगणः नगणः रगणः रगणः
। । । । । । ऽ । ऽ ऽ । ऽ
परिहि—तबटु—रम्यपी—ताम्बरं

नगणः नगणः रगणः रगणः
। । । । । । ऽ । ऽ ऽ । ऽ
गुरुकु—लमुप—दाहि म—न्त्रस्वरम्।

नगणः नगणः रगणः रगणः
। । । । । । ऽ । ऽ ऽ । ऽ
पठद—विरत—वेदवे—दाङ्गकं,

नगणः नगणः रगणः रगणः
। । । । । । ऽ । ऽ ऽ । ऽ
प्रियसु—त! भवि—तुं तु वि—धेश्वरम् ॥५॥

## ललना भ्तौ न्सावन्द्रियर्षयः ॥६॥

यस्य पादे भगण—तगणौ नगण—सगणौ च विराजेते

तद् वृत्तं 'ललना' नाम गाथा सम्पद्यते। पञ्चभिः सप्तभिश्च यतिः। उदाहरणं यथा—

भगणः तगणः नगणः सगणः
S I I S S I I I I I S
वैदिक —मन्त्रैर नुगत—विषया

भगणः तगणः नगणः सगणः
S I I S S I I I I I I S
लौकिक—पद्यैर —पि बहु—रुचिरा।

भगणः तगणः नगणः सगणः
S I I S S I I I I I I S
पिङ्गल—सूत्रे म—म कृति—रतुला

भगणः तगणः नगणः सगणः
S I I S S I I I I I I S
भाष्यम—यी सा प्र—दिशतु कविताम् ॥६॥

—इति कविवराखिलानन्दशर्मणः।

अत्रातिजगत्याम्—

कनकप्रभा स्जौ स्जौ ग् ॥७॥

यस्य पादे सगण-जगणौ पुनरपि सगण-जगणौ गकारश्च

शोभते तद् वृत्तं 'कनकप्रभा' नाम गाथा ज्ञेया। पादान्ते यतिः। उदाहरणं यथा—

सगणः जगणः सगणः जगणः गु.
। । S । S । । । S । S । S
गुरुपु—ण्यधर्म—विमुखो—जगद्गु-रु-

सगणः जगणः सगणः जगणः गु.
। । S । S । । । S । S । S
यतिवे—षमत्र नितरां कलङ्क—यन्।

सगणः जगणः सगणः जगणः गु.
। । S । S । । । S । S । S
कनक-प्रभावि--कसिता-न्तराम्बु-जः

सगणः जगणः सगणः जगणः गु.
। । S । S । । । S । S । S
कनका-ङ्गनार-तमना निरीक्षि-तः ॥७॥

(दया० महा० १२।११६)

कुटिलगति नौं तौ ग् स्वरर्तवः ॥८॥

यस्य पादे नगणौ तगणौ गकारश्च राजते तद् वृत्तं 'कुटिलगति'र्नाम गाथा गीयते। सप्तभिः षड्भिश्च यतिः।

उदाहरणं यथा—

नगणः नगणः तगणः तगणः गु.

। । । । । । ऽ ऽ । ऽ ऽ । ऽ

सकल-सुखनि-धौ, भोग-दुःखाप-हे

नगणः नगणः तगणः तगणः गु.

। । । । । । ऽ ऽ । ऽ ऽ । ऽ

सति प-रमगु-रौ, भोगि-नां मान-सम् ।

नगणः नगणः तगणः तगणः गु.

। । । । । । ऽ ऽ । ऽ ऽ । ऽ

क्षणम-पि कुरु-ते, चिन्त-नं नो प्र-भो-

नगणः नगणः तगणः तगणः गु.

। । । । । । ऽ ऽ । ऽ ऽ । ऽ

रिह कु-टिलग-तेः, स्यात् क-थं सद्ग-तिः ॥८॥

अत्र शक्वर्याम्—

वरसुन्दरी भ्जौ स्नौ गौ ॥९॥

यस्य पादे भगण-जगण-सगण-नगणा गकारौ च वर्तेते तद् वृत्तं 'वरसुन्दरी' नाम गाथा गीयते। पादान्ते यतिः।
उदाहरणं यथा—

भगण। जगण। सगणः नगण। गु. गु.

S I I  I S  I I I S  I I I  S S

स्वादुशि-शिरोज्ज्व-लसुग-न्धिजल-पू-र्णां

भगणः जगणः सगणः नगण। गु. गु.

S I I  I S I  I I S  I I I  S S

वीचिच-यचश्च-लविचि-त्रशत-प-त्रम् ।

भगणः जगण। सगणः नगणः गु. गु.

S I I  I S I  I I S  I I I  S S

हंसक—लकूजि—तमनो—हरत—टा-न्तं

भगणः जगणः सगण नगणः गु. गु.

S I I  I S I  I I S  I I I  S S

पश्य सु-कन्ये ! गि-रिसरो वरमु-दा-रम् ॥९॥

—परिवर्त्य महाकवेर्हलायुधस्य ।

कुटिला म्भौ न्यौ गौ वेदरससमुद्राः ॥१०॥

यस्य पादे मगण—भगण—नगण—यगणा गकारौ च विलसतस्तद् वृत्तं 'कुटिला' नाम गाथा कथ्यते। चतुर्भिः षड्भिश्चतुर्भिश्च यतिः। उदाहरणं यथा—

मगणः भगणः नगणः यगणः गु. गु.

S S S S I I I I I I S S S S

ग्रामे ग्रा–मे, विल–सति व–र,विद्व–त्स–ङ्गः

मगणः भगणः नगणः तगणः गु. गु.

S S S S I I I I I I S S S S

सङ्गे स–ङ्गे प्रभ–वति ख–लु,शुद्धा बु–द्धि-

मगणः भगणः नगणः यगणः गु. गु.

S S S S I I I I I I S S S S

र्बुद्धौ बु–द्धा,वुद–यति प–र,तत्त्व–ज्ञा–नं

मगणः भगणः नगणः यगणः गु. गु.

S S S S I I I I I I S S S S

ज्ञाने ज्ञा–ने, हृद–यमतु–ल,मोदे ली–नम् ॥१०॥

अत्राष्टौ—

शैलशिखा भ्रौ न्भौ भ्गौ भूतरसेन्द्रियाणि ॥११॥

यस्य पादे भगणरगणौ नगणभगणौ भगणो गकारश्च जायते तद् वृत्तं 'शैलशिखा' नाम गाथा गद्यते। पञ्चभिः षड्भिः पञ्चभिश्च यतिः। उदाहरणं यथा—

भगणः रगणः नगणः भगणः भगणः गु.

S | | S | S | | | S | | S | | S

शैलशि–खानि,कु–ञ्जशयि–तस्य, ह–रेः श्रव–णे

भगणः रगणः नगणः भगणः भगणः गु.

S | | S | S | | | S | | S | | S

जीर्णतृ–णं क,रे–ण निद–धाति, क–पिश्चप–लः ।

भगणः रगणः नगणः भगणः भगणः गु.

S | | S | S | | | S | | S | | S

क्षुद्रव—धाप,रा—दपरि– हार,वि—नीतम—ते-

भगणः रगणः नगणः भगणः भगणः गु.

S | | S | S | | | S | | S | | S

स्तस्य न तात्र,तै–व लघु–ता द्वि,प–यूथभि–दः ॥११॥

—इति महाकवेर्हलायुधस्य ।

## वरयुवती भ्रौ य्नौ न्गौ ॥१२॥

यस्य पादे भगण–रगणौ यगण–नगणौ नगणो गकारश्च विभाति तद् वृत्तं 'वरयुवती' नाम गाथा गीयते । पादान्ते यतिः । उदाहरणं यथा—

भगणः रगणः यगणः नगणः नगणः गु.

S I I S I S I S S I S

वेदसु—मन्त्रशु—द्बोध—ग्रहण—वरम—तिः

भगणः रगणः यगणः नगणः नगणः गु.

S I I S I S I S S I I I I I I S

संस्कृत-भाषणा--तिमुग्धा-खिलवि-बुधम-तिः।

भगणः रगणः यगणः नगणः नगणः गु.

S I I S S I S S I I I I I I S

काव्यक—लापटी—यसी नि—र्मलहृ—दयग-ति-

भगण. रगणः यगणः नगणः नगणः गु.

S I I S I S I S S I I I I I I S

नन्दय—तीह क न सार्या—न्वयव—रयुव-ती ॥१२॥

अत्रात्यष्टौ—

अतिशायिनी सौ ज्भौ ज्गौ ग् दिक्स्वराः ॥१३॥

यस्य पादे सगणौ जगणभगणौ जगणो गकारौ च शोभेते वृत्तं 'अतिशायिनी' नाम गाथाभिधीयते। दशभिः सप्तभिश्च यतिः। उदाहरण यथा—

सगणः सगणः जगणः भगणः जगणः गु गु.

। । ऽ । । ऽ । ऽ । ऽ । । । ऽ । ऽ ऽ

व्रतिनी श्रुतिध-र्मशिक्ष-णे, गुरु-कुले प्र-स-न्ना

सगणः सगणः जगणः भगणः जगणः गु. गु.

। । ऽ । । ऽ । ऽ । ऽ । । । ऽ । ऽ ऽ

तनया विनया-न्विता म-म, स्वप-ठने नि-म-ग्ना ।

सगणः सगणः जगणः भगणः जगणः गु. गु.

। । ऽ । । ऽ । ऽ । ऽ । । । ऽ । ऽ ऽ

मदभी-ष्टगुणा-तिशायि-नी, विम-लवन्द्य-शी-ला

सगणः सगणः जगणः भगणः जगणः गु. गु.

। । ऽ । । ऽ । ऽ । ऽ । । । ऽ । ऽ ऽ

कुरुतां सफलं स्वजीव-नं, सुय--शसोज्ज्व-ला--लम् ॥१३॥

अवितथं न्जौ भ्जौ ज्लौ ग् ॥१४॥

यस्य पादे नगणजगणौ भगणजगणौ जगणलकारौ गकारश्च विलसति तद् वृत्तम् 'अवितथं' नाम गाथा गीयते । पादान्ते यतिः । उदाहरणं यथा—

नगणः जगणः भगणः जगणः जगणः ल. गु.

।।। ।S। S।। ।S। ।S। । S

गुरुच-रणार-विन्दयु-गसेव-नशुद्ध-म-नाः

नगणः जगणः भगणः जगणः जगणः ज. गु.

।।। ।S। S।। ।S। ।S। । S

श्रुतिग-तसंश-यान्निग-मविद्गु-रुतो नु-नु-दे

नगणः जगणः भगणः जगणः जगणः ल. गु.

।।। ।S। S।। ।S। ।S। । S

अवित-थवाङ्मु-निः श्रुति-मतप्र-थनोत्सु-क-धी-

नगणः जगणः भगणः जगणः जगणः ल. गु.

।।। ।S। S।। ।S। ।S। । S

र्गुरुव-रसम्म-तिं स ग-मनार्थ-मवाप त-तः ॥१४॥

(दया० महा० १२।५८)

वस्विन्द्रियसमुद्राश्चेत्कोकिलकम् ॥१५॥

यस्य पादे पूर्वोदिता गणा भवन्ति, अष्टभिः पञ्चभि-श्चतुर्भिश्च यतिर्भवति तद् वृत्तं 'कोकिलकम्' इति गाथा गीयते उदाहरणं यथा—

नगणः जगणः भगणः जगणः जगणः ल. गु.

| | | | S | S | | | S | | S | | S

नवस–हकार–पुष्प,म–धुनिष्क–ल,कण्ठ–त–या

नगणः जगणः भगणः जगणः जगणः ल. गु.

| | | | S | S | | | S | | S | | S

मधुर–तरस्व–रेण, प–रिकूज–ति, कोकि–ल–कः ।

नगणः जगणः भगणः जगणः जगणः ल. गु.

| | | | S | S | | | S | | S | | S

प्रथम–ककार–विद्ध,व–चनैर्ध– न,लुब्ध–म–ते–

नगणः जगणः भगणः जगणः जगणः ल. गु.

| | | | S | S | | | S | | S | | S

स्तव ग–मनस्य भङ्ग,मि–व सम्प्र–ति, कर्तु–म–नाः ॥१५॥

— इति महाकवेर्हलायुधस्य ।

अत्र धृतौ—

विबुधप्रिया र्सौ जौ भ्रौ वसुदिशः ॥१६॥

यस्य पादे रगण–सगणौ जगणौ भगणरगणौ च शोभेते तद् वृत्तं 'विबुधप्रिया' नाम गाथा संगीयते। अष्टभिर्दशभिश्च यतिः । उदाहरणं यथा—

रगणः सगणः जगणः जगणः भगणः रगणः

S | S | | S | S | | S | S | | S | S

भावप्र-द्गुणसु-न्दरी, स-मलंकृ-ता रस-नन्दिनी

रगणः सगणः जगणः जगणः भगणः रगणः

S | S | | S | S | | S | S | | S | S

सत्कवेः कविते-व सा, रु-चिरास्त्व-लं विबु-धप्रिया ।

रगणः सगणः जगणः जगणः भगणः रगणः

S | S | | S | S | | S | S | | S | S

ब्रह्मव-र्चसशा-लिनी, मु-निहंस-जीवन-सत्कथा

रगणः सगणः जगणः जगणः भगणः रगणः

S | S | | S | S | | S | S | | S | S

ब्रह्मद-र्शनम-ङ्गला, भ- व-भूति-मुक्तिसु-खोदया ॥१६॥

दया० महा० १२।१५०

नाराचकं नौ रौ रौ ॥१७॥

यस्य पादे नगणौ रगणाश्चत्वारो विलसन्ति तद् वृत्तं 'नाराचक' नाम गाथा संगीयते । वसुदिश इत्यनुवर्तते । दशभिरष्टभिश्च यतिः । उदाहरणं यथा—

नगण: नगण: रगण: रगण: रगण: रगण:

। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ

रघुप-तिरपि जातवे--दो, विशु-द्धां प्रगृ-ह्य प्रियां

नगण: नगण: रगण: रगण: रगण: रगण:

। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ

प्रियसु-हृदि वि-भीषणे सं, क्रम-य्य श्रियं वैरिण: ।

नगण: नगण: रगण: रगण: रगण:

। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ

रविसु-तसहि-तेन ते-ना, नुया-त: स सौ-मित्रिणा

नगण: नगण: रगण. रगण: रगण: रगण:

। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ

भुजवि-जितवि-मानर-त्ना, धिरू-ढ: प्रत-स्थे पुरीम् ॥१७॥

(रघुवंशे १२।१०४)

अत्रातिधृतौ—

विस्मिता य्मौ न्सौ रौ ग् रसर्तुस्वरा: ॥१८॥

यस्य पादे यगण-मगणौ नगण-सगणौ रगणौ गकारश्च विभाति तद् वृत्तं 'विस्मिता' नाम गाथा निगद्यते । षड्भि: षड्भि: सप्तभिश्च यति: । उदाहरणं यथा—

यगणः मगणः नगणः सगणः रगणः रगणः गु.

।ऽऽ ऽऽऽ ।।। ।।ऽ ऽ।ऽ ऽ।ऽ ऽ

जनानां बोधाय, श्रुतिम-तधर,स्तत्र पा-खण्डजि-ष्णु-

यगणः मगणः नगणः सगणः रगणः रगणः गु.

।ऽऽ ऽऽऽ ।।। ।।ऽ ऽ।ऽ ऽ।ऽ ऽ

र्नदीष्णः शास्त्रार्थे, ध्वजम-पलधो,-र्धूर्तपा-खण्डख-ण्ड।

यगणः मगणः नगणः सगणः रगणः रगणः गु.

।ऽऽ ऽऽऽ ।।। ।।ऽ ऽ।ऽ ऽ।ऽ ऽ

न्यखानीत् संन्यासी, द्विजय-तिगणैः सेवितः संवसद्-भि-

यगणः मगणः नगणः सगणः रगणः रगणः गु.

।ऽऽ ऽऽऽ ।।। ।।ऽ ऽ।ऽ ऽ।ऽ ऽ

र्यदालो-क्याश्चर्य,प्रथनचतुर, प्रेक्षका विस्मिता-क्षाः ॥१८॥

(दया० महा० १२।८८)

त्र कृतौ—

शशिवदना न्जौ भ्जौ ज् ज्रौ रुद्रदिशः ॥१९॥

यस्य पादे नगण-जगणौ भगणो जगणास्त्रयो रगणश्च शोभते तद् वृत्तं 'शशिवदना' नाम गाथा समुदीर्यते। एकादशभिर्दशभिश्च यतिः। उदाहरणं यथा—

नगणः जगणः भगणः जगणः जगणः जगणः रगणः

। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ । ऽ । ऽ

निगम-पथानु-गस्य नि-पत,ज्ज-गदुद्ध-रणैक-कर्मणः

नगणः जगणः भगणः जगणः जगणः जगणः रगणः

। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ । ऽ । ऽ

प्रकटि-तसत्प-थस्य प-रितो, म-तखण्ड-नदत्त-शर्मणः ।

नगणः जगणः भगणः जगणः जगणः जगणः रगणः

। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ । ऽ । ऽ

विदलि-तकाप-थस्य नि-तरां, धृ-तकीर्ति-मयैक-वर्मणः

नगणः जगणः भगणः जगणः जगणः जगणः रगणः

। । । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ । ऽ । ऽ

कविज-ननाय-कस्य भ-वता,ज्ज-गतीत-ल एव सम्भवः ॥१६॥

—इति कविवराखिलानन्दशर्मणः ।

इति समादिवृत्तत्रयं समाप्तम् ।

सूचना- अस्मादग्रे षोडश-प्रस्तारसूत्रेषु स्वामिवेदानन्दवेदवागीशकृता वृत्तिर्वर्तते । मुनिमेधाव्रताचार्यस्तु प्रस्तारेऽरुचिं दर्शयन् वृत्तिं न कृतवान् ।

—वेदव्रतः शास्त्री

इमानि कानिचिद् वृत्तानि महर्षिणा पिङ्गलाचार्येण दिङ्-मात्रं निदर्शितानि । अनभिहितलक्षणान्तराणीतराण्यपि भूयांसि छन्दांसि महाकविप्रयोगेष्ववलोक्यन्ते तानि विशेषसंज्ञाभावान्न शास्त्रकृता प्रदर्शितानि । तानि वक्ष्यमाणेन प्रस्तारविधिनावगत्य गाथानामधेयानि बोद्धव्यानि ।

उक्तानुक्तछन्दसां समेषां विशेषव्युत्पत्त्यर्थमिदानीं प्रस्तार-नष्टोद्दिष्टसङ्ख्यानाध्वयोगैकद्व्यादिगलक्रियान् षट्प्रत्ययान् प्रत्याय-यितुं प्रवर्तमान आचार्यः षट्स्वेषु प्रस्तारस्य मुख्यत्वात्तमेवाभिधि-त्सुरेकाक्षरप्रस्तारं विवृणोति तावत्—

द्विकौ ग्लौ ॥२०॥

द्वावेव द्विकौ स्वार्थे कन् "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" ग् च ल् च ग्लौ । यावद् ब्रूयाद् 'द्वौ ग्लौ' तावद् 'द्विकौ ग्लौ'' इति । एतद् वक्तुं शक्यम्—एकाक्षरप्रस्तारस्य द्वौ भेदौ भवतः । प्रथमो भेदः—एकेन गुरुणाक्षरेण, द्वितीयश्चैकेन लघुना । उपरिष्टाद् गकारं (S) विन्यस्य तदधो लकारं (।) लिखेत् । सर्वगुर्वात्मक एकः, सर्वलघुकश्चैकः । इत्थमिमौ द्वौ भेदौ निष्पद्य-मानौ निम्नविधिना स्वरूपतो प्रदर्श्येते —

| पङ्क्तिः | भेदः | |
|---|---|---|
| S | १ भेदः | उक्तायाम् |
| । | २ भेदः | |

द्व्यक्षरस्य प्रस्तारमवगमयन्नाह—

## मिश्रौ च ॥२१॥

चकारकरणाद् 'द्विकौ ग्लौ' इत्यनुवर्तते। तत्प्रथमा पङ्क्ति-स्तेन प्रस्तार्यते। तदर्थं तत्सूत्रमेवं व्याख्येयम्—द्वे आवृत्ती प्रमाण-मनयोरिति द्विकौ "संख्याया अतिशदन्तायाः कन्" (५।१।२२) इति कन् प्रत्ययः। ग् च ल् च ग्लौ, ग् च ल् च ग्लौ। द्विःस्थापनी-याविस्यभिप्रायः। प्रदर्शनार्थमधस्तनी विधा विज्ञेया—

प्रथमावृत्तिः { S न गकारेण गकारो मिश्रितः।
| 

द्वितीयावृत्तिः { S न लकारेण लकारो मिश्रितः।
| 

द्वितीयां पङ्क्तिं प्रस्तारयितुं "मिश्रौ" इत्युक्तम्। मिश्रश्च मिश्रश्च=मिश्रौ। गुरुर्गुरुणा मिश्रो लघुश्च लघुना वर्णेन मिश्रः सजातीयत्वात्। तदेव चत्वारो वर्णा भवन्ति यान् स्वरूपतो द्वितीयायां पङ्क्तौ प्रदर्शयामः—

प्रथमा पंक्तिः द्वितीया पंक्तिः

प्रथमावृत्तिः : { S
S गकारो गकारेण मिश्रः।

द्वितीयावृत्तिः : { |
| लकारो लकारेण मिश्रः।

तदिदानीमुभे पंक्ती एवं शक्येते लिखितुम्—

| | | |
|---|---|---|
| SS | १ | अत्युक्तायाम् |
| ।S | २ | |
| S। | ३ | |
| ।। | ४ | |

एवम्प्रकारं द्व्यक्षरस्य चत्वारो भेदा निष्पद्यन्ते, तत्रैकः सर्वगुरुकः, द्वितीय आद्यलघुरूपः, तृतीयोऽन्त्यलघ्वात्मकः, चतुर्थश्च सर्वलघुमान् ।

त्र्यक्षरादिप्रस्तारस्य व्युत्पत्तये सूत्रयन्नाह—

पृथग् ग्ला मिश्राः ॥२२॥

सूत्रमिदं विभज्य वचनीयम् । 'पृथक्' इत्येकम् । 'ग्ला मिश्राः' इत्यपरम् । तत्र 'पृथक्' इत्यनेनायमर्थः—पूर्वं यदनुक्रान्तं यच्चानुक्रंस्यते तद् यथापूर्वं पृथक् प्रस्तार्य स्थापनीयं त्रिचतुरादीनां षड्विंशत्यक्षरान्तानां प्रस्तारान् साधयितुम् । पुनः यस्याप्यक्षरस्य प्रस्तारो विधीयते तत्रान्त्यां पंक्तौ पुनर्ग्ला मिश्रा इत्येतद् गकारा लकाराश्च मिश्रा देयाः । प्रथमावृत्तौ गकारा एव, द्वितीयावृत्तौ च लकारा एव सर्वत्रेति निश्चयः ।

त्र्यक्षरस्य पूर्णप्रस्तारो द्व्यक्षरप्रस्तारसहितोऽधस्तन-विधिना बोध्यः—

| १ पंक्तिः | २ पंक्तिः | ३ पंक्तिः | | | |
|---|---|---|---|---|---|
| S | S | S | प्रथमावृत्तिः | १ भेदः | मध्यमायाम् |
| । | S | S | | २ भेदः | |
| S | । | S | | ३ भेदः | |
| । | । | S | | ४ भेदः | |
| S | S | । | द्वितीयावृत्तिः | ५ भेदः | |
| । | S | । | | ६ भेदः | |
| S | । | । | | ७ भेदः | |
| । | । | । | | ८ भेदः | |

चतुर्थभेदादग्रे प्रथमा द्वितीया च पंक्तिः पूर्ववत् प्रदर्शन-

दिशा पूरणीया, तदेवं त्र्यक्षरप्रस्तारः सिध्यति। स चाष्टधा भिद्यते। सूत्रमुखेन तमेव निर्दिशति—

वसवस्त्रिकाः ॥२३॥

वसुशब्देनाष्टसंख्याभिमता। त्र्यक्षरप्रस्तारे ते त्रिका अष्टौ जायन्ते न न्यूना न चाधिकाः।

इत्थमेव चतुःपञ्चषडाद्यक्षरस्य षड्विंशत्यक्षरपर्यन्तस्य प्रस्तारे गतवृत्तं पृथक् स्थापयित्वा 'गलौ मिश्रौ' इत्यनेन प्रथमावृत्तौ गकारा द्वितीयावृत्तौ च लकारा एव लेख्याः। अवशिष्टस्थानञ्च गुरुलघुक्रमेण पूरणीयम्। चतुरक्षरप्रस्तारस्य प्रक्रिया स्वरूपता प्रदर्श्यते—

| | | | |
|---|---|---|---|
| १ | S S S S | ९ | S S S I |
| २ | I S S S | १० | I S S I |
| ३ | S I S S | ११ | S I S I |
| ४ | I I S S | १२ | I I S I |
| ५ | S S I S | १३ | S S I I |
| ६ | I S I S | १४ | I S I I |
| ७ | S I I S | १५ | S I I I |
| ८ | I I I S | १६ | I I I I |

चतुरक्षरप्रस्तारवतीयं प्रतिष्ठायां षोडशभेदतः।

पञ्चाक्षरप्रस्तारस्य प्रक्रियास्वरूपम्—

| | | | |
|---|---|---|---|
| १ | S S S S S | १७ | S S S S I |
| २ | I S S S S | १८ | I S S S I |
| ३ | S I S S S | १९ | S I S S I |
| ४ | I I S S S | २० | I I S S I |
| ५ | S S I S S | २१ | S S I S I |
| ६ | I S I S S | २२ | I S I S I |
| ७ | S I I S S | २३ | S I I S I |
| ८ | I I I S S | २४ | I I I S I |
| ९ | S S S I S | २५ | S S S I I |
| १० | I S S I S | २६ | I S S I I |
| ११ | S I S I S | २७ | S I S I I |
| १२ | I I S I S | २८ | I I S I I |
| १३ | S S I I S | २९ | S S I I I |
| १४ | I S I I S | ३० | I S I I I |
| १५ | S I I I S | ३१ | S I I I I |
| १६ | I I I I S | ३२ | I I I I I |

पञ्चाक्षरप्रस्तारवतीयं सुप्रतिष्ठायां द्वात्रिंशद्भेदतः ।

एवं षडक्षरप्रस्तारे चतुःषष्टिर्गायत्रीसमवृत्तानि निष्पद्यन्ते। एकैकाक्षराधिकोष्णिक्प्रभृतीनामुत्तरोत्तरद्वैगुण्यमष्टाविंशत्यधिकशतं गुर्वादिसर्वलघ्वन्तानि समवृत्तानि जायन्ते। प्रस्तारादेव षड्विंशत्यक्षरान्तानां संख्याबोधः कार्यः।

प्रस्तारशोधनोपयोगिनष्टवृत्तस्य द्वितीयप्रत्ययस्य परिज्ञानार्थं सूत्रद्वयेन लक्षणमाह—

लर्द्धे ॥२४॥

यदैवं विवित्सा स्यात् सुप्रतिष्ठायां षष्ठं समवृत्तं कीदृगिति तदा षष्ठविशेषसंख्यामर्द्धयेत्। अर्द्धीकृते ल् लघुर्लभ्यते। तत्पत्रेऽङ्कन्याङ्कयेदेवम् (।) अवशिष्टेदानीं विषमा त्रिसंख्या नार्द्धयितुं शक्येति कर्त्तव्यं निर्दिशति—

सैके ग् ॥२५॥

'अर्द्धे' इत्यनुवर्तते। तदवशिष्टां तां त्रिसंख्यामेकेन सहितां विधायार्द्धीकुर्यात्। ततो ग् गुरुर्लभ्यते तं पूर्वलब्धाल्लघोः परत एवं (। s) स्थापयेत्।

ततः शिष्टां द्विसंख्यां समत्वादर्द्धयितुमर्हामर्द्धयेत्। अर्द्धयित्वा 'लर्द्धे' इति लघुर्लभ्यते तं ततः परस्तादेवं (। s।) विन्यसेत्। इदानीमेकसंख्यावशिष्यते, सासमत्वान्नार्द्धं कर्तुं शक्यते, तस्मात्तां, 'सैके ग्' इत्येकेन संयुक्तामर्द्धयेत्। पुनर्गुरुर्लभ्यते। तमपि पूर्वलब्धेभ्यः पर एवङ्कारं (। s। s) लिखेत्। अथेदानीमेका संख्या पुनरवशिष्टा विषमा। तस्माद् आषड्क्षरं 'सैके ग्' इत्यावर्त्यार्द्ध-

यित्वा च गुरुमेव विदधीत। विधिनानेन षष्ठं वृत्तमेतादृशं (ISISSS) निष्पन्नमिति विदाङ्कुर्वन्तु छन्दोविचितिपरायणाः। तत्रायं निष्कर्षः—समसंख्यार्द्धयितुं शक्यत्वात्लघोश्चिह्नं तावद् देयं यावद् विषमा संख्या न लभ्येत। ततस्ता विषमार्द्धयितुमनर्हत्वात्तस्यामेकां निःक्षिप्यार्द्धयेत् तदा गुरोश्चिह्नं दद्याद्। इदमपि तावदभ्यसनीयं यावत् समसंख्या नाप्येत।

यदि बुभुत्सा स्यात् त्र्यक्षरप्रस्तारे पञ्चमो भेदः कीदृशः, तर्हि पूर्वप्रदर्शितविधयैवं लेख्यः—

$$\left\{\frac{५+१}{२}=३\right\}_{S} \left\{\frac{३+१}{२}=२\right\}_{S} \left\{\frac{२}{२}=१\right\}_{I}$$

चतुरक्षरप्रस्तारे पञ्चदशः कीदृगिति जिज्ञासायाम्—

$$\left\{\frac{१५+१}{२}=८\right\}_{S}\left\{\frac{८}{२}=४\right\}_{I}\left\{\frac{४}{२}=२\right\}_{I}\left\{\frac{२}{२}=१\right\}_{I}$$

यदि वेत्तुमिच्छेद् गायत्र्यां षडक्षरप्रस्तारे षष्टितमो भेदः कथमिव—

$$\left\{\frac{६०}{२}=३०\right\}_{I}\left\{\frac{३०}{२}=१५\right\}_{I}\left\{\frac{१५+१}{२}=८\right\}_{S}$$

$$\left\{\frac{८}{२}=४\right\}_{I} \left\{\frac{४}{२}=२\right\}_{I} \left\{\frac{२}{२}=१\right\}_{I}$$

उष्णिग्हि सप्ताक्षरे सप्तपञ्चाशत्तमः कीदृक्—

$$\left\{\frac{५७+१}{२}=२९\right\}\left\{\frac{२९+१}{२}=१५\right\}\left\{\frac{१५+१}{२}=८\right\}$$

S S S

$$\left\{\frac{८}{२}=४\right\}\left\{\frac{४}{२}=२\right\}\left\{\frac{२}{२}=१\right\}\left\{\frac{१+१}{२}=१\right\}$$

। । । S

यदा कामयेतानुष्टुभ्यष्टाक्षरे सप्ततितमः कीदृश इति तदा—

$$\left\{\frac{७०}{२}=३५\right\}\left\{\frac{३५+१}{२}=१८\right\}\left\{\frac{१८}{२}=९\right\}\left\{\frac{९+१}{२}=५\right\}$$

। S । S

$$\left\{\frac{५+१}{२}=३\right\}\left\{\frac{३+१}{२}=२\right\}\left\{\frac{२}{२}=१\right\}\left\{\frac{१+१}{२}=१\right\}$$

S S । S

अथातः प्रस्तारनिश्चयोपयोग्युद्दिष्ट–प्रत्ययस्य संख्याबोधनार्थमुपक्रमते—

प्रतिलोमगुणं द्विर्लाद्यम् ॥२६॥

प्रतिलोमपदस्योपादानाल्लकारः प्रस्तारान्ते उपादेयः। तमन्त्यमादिलकारं मत्वा विलोमेन–हस्तदक्षिणतो हस्तवामं प्रति द्विवारं

गुणयेत् । न हि लकारगुणनेन संख्यावगतिरिति मत्वा काचित्संख्यैवावर्तनीया । सा चाप्यत्रानुपात्ता । अत आहन्तुमर्हत्वादेकैवादातुमुचिता । तल्लकारस्योपरिष्टादधस्ताद् वा एकाङ्कं तत्रैव द्विरावर्तयेत् । लब्धं द्व्यङ्कं तत्रैव लिखेत् । एषावृत्तिस्तावद् विधेया यावल्लघुन्यक्षराणि चिह्नानि वा लभ्येरन् ।

एकाक्षरादारभ्य षड्विंशत्यक्षरपर्यन्तानां पृथक् पृथक् प्रस्तारे विहिते सति यान्तिमा सर्वलघ्वन्ता संख्योपजायते तत्र सर्वत्रैवेदं सूत्रं चरितार्थम् । किं च—यस्मिन् प्रस्तारे लघुगुरूण्युभयविधानि वाक्षराणि सङ्गच्छन्ते तत्रापि लघ्वक्षरे लघ्वक्षरेषु वा, एतत्सूत्रानुसारमेव पूर्वलब्धा संख्या द्विरावर्तनीयेति ।

सर्वेषामक्षराणामादिमप्रस्तारस्य मध्यगतप्रस्ताराणां वा गुरुस्थानेषु विशेषविधिं विधातुमभिधत्ते—

ततो ग्येकं जह्यात् ॥२७॥

गुरावाप्ते सति द्विरावृत्तिसंख्यात एकाङ्कं हीनयेत् । पुनरुत्तरोत्तरं लघुगुर्वक्षरं प्रपद्य यथाविहितं द्विगुणह्रासौ तावद् विदधीत यावत्प्रस्तारावसितिर्न स्यात् । सत्येवं क्रियमाणे यान्ते संख्या प्रादुःष्यात् तावतिथमेव तद्वृत्तं विजानीत ।

छन्दोऽध्येतॄणां सौकर्याय स्वरूपतोऽपीदानीं प्रदर्श्यते—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| चतुरक्षरस्य १६ अन्तिमो भेदः | | | । | । | । | । | प्रतिलोमगुणं द्विलघिकम् |
| | | | १६ | ८ | ४ | २ | |
| षडक्षरस्य ६४ अन्तिमः प्रस्तारः | । | । | । | । | । | । | |
| | ६४ | ३२ | १६ | ८ | ४ | २ | |

| | | |
|---|---|---|
| चतुरक्षरस्य १ आदिमः प्रस्तारः = | S S S S<br>१ १ १ १ | ततो ग्येकं जह्यात् |
| षडक्षरस्य १ आदिमः प्रस्तारः = | S S S S S S<br>१ १ १ १ १ १ | |

एकांको द्विरावृत्यैकाहीनः सम्पन्नः ।

लघुगुरुभिश्रिते प्रस्तारे निम्नविधिरवधेयः—

चतुरक्षरस्य ११ एकादशो भेदः = S । S ।
११ ६ ३ २

चतुरक्षरस्य ६ षष्ठो भेदः = । S । S
६ ३ २ १

षडक्षरस्य १९ एकोनविंशो भेदः = S । S S । S
१९ १० ५ ३ २ १

षडक्षरस्य ३६ षड्त्रिंशत्तमो भेदः = । । S S S ।
३६ १८ ९ ५ ३ २

एवं षड्विंशत्यक्षरपर्यन्तानामुदाहार्यम् ।

प्रस्तारमन्तरावृत्तसंख्याविधायकं संख्यानाख्यप्रत्ययभेदं चतुःसूत्र्या विवरीतुमाह—

द्विरर्द्धे ॥२८॥

'अपनीते' इति सप्तम्यन्तं पदमध्याहर्तव्यम्, 'अर्द्धे' इत्यनेना-

न्वेतुम्। 'अर्द्धे' इति पदं सूत्र उपादीयमानं समसंख्या—प्रत्यायकं प्रत्येतव्यं तस्या एवार्द्धीकरणसम्भवात्। एतदुक्तं भवति—कस्याश्चिदपि समसंख्याया अर्द्धेऽपनीते द्विर्लभ्यते। द्व्यङ्कस्य तत्स्थानं बोधव्यमिति सूत्रार्थः। द्विरिति पारिभाषिकी सञ्ज्ञा घातस्य। एतदग्रे स्फुटीभविष्यति।

यदि कश्चिदवजिगमिषेत्–अष्टाक्षरे छन्दसि कति वृत्तानि भवन्ति तदैतत्सूत्रानुसारमष्टसंख्यातस्तदर्द्धं चतुःसंख्यारूपमपसारयेत्। एवमर्द्धेऽपनीते द्व्यङ्कं लब्धं पत्रेऽङ्कयेत्। अवशिष्टा चतुःसंख्यापि समास्ति। तस्मात्पुनरिदमेवावर्तयेत् 'द्विरर्द्धे' इति। चतुःसंख्यातस्तदर्द्धे द्विसंख्यारूपे निष्कासिते द्व्यङ्कं लब्धं, पूर्वप्राप्तद्व्यङ्कस्याधो विन्यसेत्। शेषीभूता द्विसंख्यापि समैवास्ति। तस्मात्ततोऽप्यर्द्धेऽपह्निते लब्धमिमं द्व्यङ्कमपि पूर्वलब्धयोर्द्व्यङ्कयोर्नीचैर्लिखेत्। अवशिष्ट एकाङ्को विषमः स च पूर्णाङ्केनार्द्धयितुमशक्यः। तन्नेदानीमस्य सूत्रस्य प्रवृत्तिरिति विधास्यमानां क्रियामभिधित्सुराहाचार्यः—

रूपे शून्यम् ॥२९॥

'अपनीते' इत्यत्राप्यनुवर्त्यम्, 'रूपे' इत्यनेनान्वयो यथा स्यात्। एकत्वोपलक्षणं रूपग्रहणम्। तेनायमर्थः—विषमसंख्यात एकाङ्के निस्सारिते शून्योपलब्धिर्विज्ञेया। तच्छून्यस्थानं निश्चिनुयादित्यवगमः।

इदानीं प्रकृतमनुसरामः—अवशिष्टविषमैकाङ्कत एकाङ्कात्मके रूपे ह्रासिते शून्यं लभ्यते। तत्तेषामधस्तनं कुर्यात्। विकलिते च शून्यमवाशिष्टं तन्न कयोश्चिदपि सूत्रयोः प्रवृत्तिरिति विरतिरवधार्या।

स्पष्टप्रतिपत्तये स्थापनविधिरेवं बोध्यः—

| | | |
|---|---|---|
| छन्दोऽक्षरसंख्या | ८ | |
| अपनेतव्यमर्द्धम् | ४ | अर्द्धापनयने लब्धः २ इत्यर्द्धस्थानम् |
| अवशिष्टा संख्या | ४ | |
| अपनेतव्यमर्द्धम् | २ | अर्द्धेऽपनीते लब्धः २ इत्यर्द्धस्थानम् |
| अवशिष्टा संख्या | २ | |
| अपनेतव्यमर्द्धम् | १ | अर्द्धेऽपसारिते लब्धः २ इत्यर्द्धस्थानम् |
| अवशिष्टा संख्या | १ | |
| अपनेतव्यं रूपम् | १ | रूपे न्यूने लब्धः ० इति शून्यस्थानम् |

अग्रे किं विधेयमिति सूत्रयति—

द्विः शून्ये ॥३०॥

'रूपे शून्यम्' इत्यस्यानन्तरमेव 'द्विः शून्ये' सूत्रं निर्मिमाणो ज्ञापयत्याचार्यः—सर्वनिम्नस्थानलब्धशून्यादेव करिष्यमाणां विधामारभेत नातोऽन्यथेतीष्टसिद्धेः।

द्विरित्यत्रावृत्तिबोधकः सुच् प्रत्ययः। शून्ये—शून्यस्थाने संख्यां द्विरावर्तयेत्। सा च प्रथमातिक्रमे कारणाभावाद्, द्वयादिग्रहणेऽपि हेत्वभावादेकसंख्यैव शक्योपादातुम्। तामेक—संख्यां द्विर्हन्यात्। लब्धामिमां शून्यस्थानात् परः स्थापयेत्।

तत्पश्चात् किमनुतिष्ठेदिति निरूपयति—

तावदर्द्धे तद्गुणितम् ॥३१॥

द्विराहतामिमां स्वोपरिस्थितार्द्धस्थानात्मके द्वयङ्के निधाय

तावतैव गुणयितव्या। एतच्छक्यं वक्तुम्—आसादिता संख्या स्वसंख्ययैव सम्पीडनीयेति। अस्मात्कारणाद् लब्धौ द्वौ द्वाभ्यामेवाहतौ चत्वारो भवन्ति। तदुपरिष्टात्पुनर्द्व्यङ्कागतार्द्धस्थानम्। तस्माच्चत्वारो चतुर्भिरावर्तिताः षोडश जायन्ते। तदुपर्यपि द्व्यङ्काप्तार्द्धस्थानम्—ततः षोडशसंख्याऽऽत्मसंख्यया गुणिता षट्पञ्चाशदुत्तरद्विशतं संख्या भवति। इयमेव संख्याष्टाक्षरवृत्तस्य।

अवशिष्टा स्वरूपवती प्रक्रिया चैषा—

| | | | | | | |
|---|---|---|---|---|---|---|
| अर्द्धस्थानम् | २ | १६×१६=२५६ | 'तावदर्द्धे तद्गुणितम्' सूत्रानुसारेण | | | |
| ,, | २ | ४×४ = १६ | ,, | ,, | ,, | |
| ,, | २ | २×२ = ४ | ,, | ,, | ,, | |
| शून्यस्थानम् | ० | १×२ = २ | 'द्विः शून्ये' | इति | सूत्रबलेन | |

विशेषतः प्रतिपत्त्यर्थं कतिपयानि प्रदर्शनानीमानि—

| | | |
|---|---|---|
| छन्दोऽक्षरसंख्या | | १ |
| विषमत्वादपनेतव्यं रूपम् | | १ रूपेऽपनीते ० शून्यस्थानम् |
| | ० | १×२=२ उत्तरम् |
| छन्दोऽक्षरसंख्या | | २ |
| समत्वादपनेतव्यमर्द्धम् | | १ अर्द्धापनयने लब्धिः २ इत्यर्द्धस्थानम् |
| अवशिष्टा संख्या | | १ |
| अपनेतव्यं रूपम् | | १ रूपेऽपनीते लब्धिः ० इति शून्यस्थानम् |
| | २ | २×२=४ उत्तरम् |
| | ० | १×२=२ |

सूत्रावृत्तितोऽधुना स्वयमूह्यम्—

छन्दोऽक्षरसंख्या ३
० ४×२= ८ उत्तरम्
२ २×२= ४
० १×२= २

छन्दोऽक्षरसंख्या ४
२ ४×४=१६ उत्तरम्
२ २×२= ४
० १×२= २

छन्दोऽक्षरसंख्या ५
० १६×२=३२ उत्तरम्
२ ४×४ =१६
२ २×२ =४
० १×२ =२

छन्दोऽक्षरसंख्या ६
२ ८×८ =६४ उत्तरम्
० ४×२ =८
२ २×२ =४
० १×२ =२

छन्दोऽक्षरसंख्या ७
० ६४×२ =१२८ उत्तरम्
२ ८×८=६४
० ४×२= ८
२ २×२= ४
० १×२= २

अष्टमाक्षरस्य पूर्वं २५६ तमे पृष्ठ उपन्यस्तम्।

छन्दोऽक्षरसंख्या ९
० २५६×२=५१२ उत्तरम्
२ १६×१६=२५६
२ ४×४= १६
२ २×२= ४
० १×२= २

छन्दोऽक्षरसंख्या १०
२ ३२×३२=१०२४ उत्तरम्
० १६× २=३२
२ ४× ४=१६
२ २×२ = ४
० १×२ = २

छन्दोऽक्षरसंख्या ११
० १०२४×२=२०४८ उत्तरम्
२ ३२×३२=१०२४
० १६× २=३२
२ ४× ४=१६
२ २×२ =४
० १× २=२

छन्दोऽक्षरसंख्या १२
२ ६४×६४=४०९६ उत्तरम्

२ ८×८ =६४
० ४×२ =८
२ २×२ =४
० १×२ =२
छन्दोऽक्षरसंख्या १३
० ४०९६×२=८१९२ उत्तरम्
२ ६४×६४=४०९६
२ ८×८ = ६४
० ४×२ = ८

२ २×२ = ४
० १×२ = २
छन्दोऽक्षरसंख्या १४
२ १२८×१२८=१६३८४ उत्तरम्
० ६४×२ =१२८
२ ८×८ =६४
० ४×२ =८
२ २×२ =४
० १×२ =२

अथाध्वयोगं प्रत्ययभेदमुपक्रमते। अध्वशब्देन तात्स्थ्योपाधिना छन्दांसि गृह्यन्ते। अध्वनां=छन्दसां योगः=अध्वयोगः।

एकाक्षरमारभ्य द्वित्रिचतुराद्यन्तानां छन्दसां योगे कियती संख्या समुपजायत इत्यवगन्तुमेकेनैव सूत्रेणाह—

द्विर्द्व्यूनं तदन्तानाम् ॥३२॥

गायत्र्यादिवृत्तासंख्याजातं द्विराहत्य द्व्यूनं द्वाभ्यां विकलं विदध्यात्, सा तदन्तानां संख्या भवति। तद्यथा—एकाक्षरस्य द्वौ भेदौ, द्व्यक्षरस्य चत्वारः, त्र्यक्षरस्याष्टौ, चतुरक्षरस्य षोडश, पञ्चाक्षरस्य द्वात्रिंशत्, षडक्षरस्य चतुःषष्टिः। एतेषां सर्वेषां भेदानां योगे कृते का संख्या लप्स्यत इत्यनुयोगे षडक्षरस्यासादितचतुःषष्टिसंख्यां द्विर्गुणयेत्। तदेवं द्विरावर्तनेनाष्टाविंशत्यधिकशतसंख्या प्रादुर्भवति। ततो द्व्यङ्कं निस्सारयेत्। एवं विहिते सति षड्विंशत्युत्तरशतसंख्या समुदिता षडक्षरपर्यन्तानां समुद्भूतेत्युत्तरं विज्ञायताम्।

अयमभिसन्धिः—यस्य कस्यचिदप्यक्षरछन्दसो द्विगुणितेन लब्धा पुनः सा द्वाभ्यामूना संख्या तदन्तानां पूर्वेषामेकाक्षरादीनां वृत्तसंख्या भवतीति ।

अनेन प्रकारेणैकाक्षरादिषड्विंशत्यक्षरान्तच्छन्दसां समवृत्त-संख्याकलनं यथा—

छन्दोऽक्षरसंख्या २६

| | | |
|---|---|---|
| २ | ८१९२×८१९२=६७१०८८६४ | समवृत्तसंख्या |
| ० | ४०९६×२=८१९२ | एकाक्षरमारभ्य षडविंशत्यक्षर-पर्यन्तानां छन्दसां सम्पूर्ण-योगः— |
| २ | ६४×६४=४०९६ | ६७१०८८६४×२—२ |
| २ | ८×८=६४ | =१३४२१७७२६ |
| ० | ४×२=८ | |
| २ | २×२=४ | |
| ० | १×२=२ | |

तदेवं त्रयोदशकोट्यः, द्विचत्वारिंशल्लक्षाणि, सप्तदशसहस्राणि, षड्विंशत्युत्तरसप्तशतानि भवन्तीति वेद्यम् ।

अथ जिज्ञासितवृत्तादग्रिमवृत्तसंख्यावगत्यै क उपाय इत्यप्यु-पन्यसति—

यथावस्थितिः ॥३३॥

उत्तरवृत्तसंख्याजिज्ञासितव्ये पूर्ववृत्तसंख्याजातं द्विगुणी-कृतमेव स्थापनीयम्, न द्व्यूनं कुर्यादिति शेषः तद्यथा—अष्टाविंशत्युत्तरशतोष्णिक्समवृत्ता संख्या द्विरावर्तिता सती परस्या अनुष्टुभ समवृत्तसंख्या षट्पञ्चाशदुत्तरशतद्वयं भवति ।

साम्प्रतमेकाक्षरादिषड्विंशत्यक्षरान्तवृत्तजातानां संख्या-समूहेषु कति एकगुरवः, कति द्विगुरवः, कति त्रिगुरवः, कति सर्वगुरवः, कति वा एकलघवः, कति द्विलघवः, कति त्रिलघवः, कति सर्वलघवो जायन्त इति साधयितुं प्रथमं चतुष्कोणमेकं निर्माय तदधस्तादुभयतोऽर्द्ध-निष्क्रान्तं कोष्ठद्वयमङ्कयेत्। तदेवं तृतीयायां पंक्तौ तथैव कोष्ठत्रयम्। चतुर्थ्यां कोष्ठचतुष्टयम्, पञ्चाम्यां च पञ्चतयम्। इत्थं विदधत् षड्विंशत्यक्षरान्तवृत्तसिद्ध्यर्थमन्तिमायां सप्तविंशतितमायां पंक्तौ सप्तविंशतिकोष्ठं निर्मिमीत। एतावत्यां जातायां क्रियायां सर्वत ऊर्ध्वशिखर इव विराजमानायामादिमपंक्तौ यदेकमेव कोष्ठं तस्मिन्नेकाङ्कं स्थापयेत् पश्चात्।

प्रत्यक्षरवृत्तेषु कति सर्वगुरवः कति वा सर्वलघव इति बुभुत्सायां विवृणोति—

परे पूर्णं परे पूर्णमिति ॥३४॥

परे—दूरभूते आदिमेऽन्तिमे च कोष्ठे तदेव लिखेद् यत्तदुपरि विद्यमानपूर्णम्—पूर्णाङ्करूपमिति। तत्रादावेकाक्षरस्य गुरुलघू वेत्तुं द्वितीयायां पंक्तौ द्वे एव कोष्ठे स्तस्ते सीमान्तकोष्ठे अपि शक्येते व्यवहर्तुम। तस्मात् तयोराद्यन्तकोष्ठयोरेकैकाङ्को निवेश्यः। आदिमे कोष्ठे विन्यस्त एकोऽङ्कः प्रत्याययति यदेकः सर्वगुरुको भेदः। अन्तिमे कोष्ठे च स्थित एकोऽङ्को बोधयति यदेकः सर्वलघुको भेदः। न चास्यां द्वितीयायां पंक्तौ तृतीयं कोष्ठमस्ति तस्मादेकाक्षरस्य द्वावेत्र भेदौ स्तः—प्रथमः सर्वगुर्वात्मा, अपरश्चान्तिमः सर्वलघ्वात्मा।

द्व्यक्षरस्य गुरुलघुभेदान् प्रतिपत्तुं त्रिकोष्ठमय्यां, तृतीयायां पंक्ताविदमेव सूत्र प्रथमं योज्यम्। तेनोभयतोऽर्द्धनिष्क्रान्ताद्यन्त-सीमान्तकोष्ठयोः पूर्ववद् एकैकाङ्कः स्थापनीयः। तस्मादेकः सर्वगुरुमान् अन्तिमश्चैकः सर्वलघुमान्। एवं प्रत्यक्षरवृत्तेषु एव

आदिमः सर्वगुरुकोऽन्तिमश्चैकः सर्वलघुको भविष्यतीति बोध्यम्। आदिममन्तिमं चान्तरा विद्यमानेषु रिक्तेषु कोष्ठेषु किं कर्तव्यमित्याह—

परे पूर्णमिति ॥३५॥

'परे' इति द्वितीयाद्विवचनम्। ऊर्ध्वविराजमानयोः कोष्ठयोर्यद् यदङ्करूपं तत्तदेकीकृत्याधस्तात्पंक्तिस्थरिक्तकोष्ठेषु क्रमशो विन्यसनीयम्। तदस्मात्सूत्रबलात् मध्यमे तृतीये कोष्ठे द्व्यङ्को लभ्यते। न चान्यत् कोष्ठमवशिष्टम्। तस्माद् द्व्यक्षरवृत्तभेदेषु द्वौ एकगुरुकौ भविष्यतः। द्वितीयप्रकारेणाप्यभिधातुं शक्यम्-द्वौ एकलघुकौ इति नात्र कश्चिद् विशेषः। द्व्यक्षरस्य सर्वे भेदा मिलित्वा चत्वारः सम्पत्स्यन्ते।

त्र्यक्षरस्य प्रस्तारे चतुर्थ्यां पंक्तौ सीमान्तकोष्ठयोराद्यन्तयोरेकैकाङ्कलब्धेनैकः सर्वगुरुरेकश्च सर्वलघुरिति निर्विवाद एव। अवशिष्टयोर्द्वयोः कोष्ठयोः १+२=३ त्र्यङ्क एकस्मिन् तथा २+१=३ त्र्यङ्क एवापरस्मिन् तस्यायमर्थः-त्रय एकगुर्वात्मानः, त्रयश्च द्विगुर्वात्मानो भेदा इति। एवमपि वक्तुं शक्यम्-त्रय एकलघ्वात्मानः, त्रयश्चैव द्विलघ्वात्मान इति। तदेव त्र्यक्षरस्य १+३+३+१=८ अष्टौ भेदा जायन्ते।

तथा हि चतुरक्षरस्य प्रस्तारे पञ्चम्यां पंक्तौ चतुस्त्रिंशत्तमेन (३४) सूत्रेणैक आदिमान् सर्वगुरुः, एकश्चान्तवान् सर्वलघुरस्त्येव। अवशिष्टानि रिक्तानि त्रीणि कोष्ठानि किं प्रत्याययन्तीति विचारणायां पञ्चत्रिंशत्तमेन(३५) सूत्रेण १+३=४ चतुरङ्क एकस्मिन्, ३+३=६ षडङ्कोऽपरस्मिन् ३+१=४ चतुरङ्कस्तृतीये कोष्ठे। सर्वे भेदा मिलित्वा १+४+६+४+१=१६ षोडश।

तेषु चत्वार एकगुरुमन्तः, षड् द्विगुरुमन्तः, चत्वारश्च त्रिगुरुमन्तः। विपरीतेनापि व्याहर्तुं प्रभवेम—यथा चत्वार एकलघुमन्तः, षड् द्विगुरुमन्तः, चत्वारश्च त्रिगुरुमन्त इति।

पूर्वविहितप्रपञ्चेनोत्तरोत्तरपञ्चषडक्षरादीनां प्रस्तारे गुरुलघवः स्वयमूह्याः।

इदानीं छात्राणां सौकर्याय मेरुप्रस्तारः क्रियातः प्रदर्श्यते।

मेरुप्रस्तारः

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | | | | १ | | | | |
| एकाक्षरस्य प्रस्तारः | | | | १ | १ | | | ........ २ भेदौ |
| द्व्यक्षरस्य " | | | | १ | २ | १ | | ........ ४ भेदाः |
| त्र्यक्षरस्य " | | | १ | ३ | ३ | १ | | ........ ८ " |
| चतुरक्षरस्य " | | | १ | ४ | ६ | ४ | १ | ........ १६ " |
| पञ्चाक्षरस्य " | | १ | ५ | १० | १० | ५ | १ | —३२ " |
| | १ | ६ | १५ | २० | १५ | ६ | १ | ६४ " |

अस्मिन् मेरुप्रस्तारविधौ हस्तवामेऽक्षरसंख्या हस्तदक्षिणे च तद्भेदा आकलितीकृत्य प्रदर्शिताः। एवं षड्विंशत्यक्षरान्तं तद्भेदा रचनीयाः।

सूत्र उपादीयमानमितिपदमध्यायसमाप्तिसूचकं सूत्रावृत्तिश्च शास्त्रसमाप्तिद्योतनायेति विज्ञेयम् ।

इति श्रीमन्मुनिमेधाव्रताचार्यरचितायां

व्रतिमङ्गलायां छन्दःसूत्रवृत्तौ

अष्टमोऽध्यायः ॥८॥

समाप्तश्चायं ग्रन्थः ।



पिङ्गलाचार्यप्रणीतः

# छन्दःसूत्र-पाठः

## ※ प्रथमोऽध्यायः ※

१ धी श्री स्त्री म्।
२ वरा सा य्।
३ का गुहा र्।
४ वसुधा स्।
५ सा ते क्व त्।
६ कदा स ज्।
७ किं वद भ्।
८ न हस न्।
९ गृ ल्।
१० गन्ते।
११ ध्रादिपरः।
१२ हे।
१३ लौ सः।
१४ ग्लौ।
१५ अष्टौ वसव इति।

इति प्रथमोऽध्यायः।



## ※ द्वितीयोऽध्यायः ※

१ छन्दः।
२ गायत्री।
३ दैव्येकम्।
४ आसुरी पञ्चदश।
५ प्राजापत्याष्टौ।
६ यजुषां षट्।
७ साम्नां द्विः।
८ ऋचां त्रिः।
९ द्वौ द्वौ साम्नां वर्धेत।
१० त्रींस्त्रीनृचाम्।
११ चतुरश्चतुरः प्राजापत्यायाः।
१२ एकैकं शेषे।
१३ जह्यादासुरी।
१४ तान्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यः।

१५ तिस्रस्तिस्रः सनाम्न्य-
एकैका ब्राह्म्यः ।

१६ प्राग्यजुषामार्ष्य इति ।

इति द्वितीयोऽध्यायः ।

## ※ तृतीयोऽध्यायः ※

१ पादः ।
२ इत्यादिपूरणः ।
३ गायत्र्या वसवः ।
४ जगत्या आदित्याः ।
५ विराजो दिशः ।
६ त्रिष्टुभो रुद्राः ।
७ एकद्वित्रिचतुष्पादुक्तपादम् ।
८ आद्यं चतुष्पाद्दतुभिः ।
९ क्वचित्त्रिपाद्दषिभिः ।
१० सा पादनिचृत् ।
११ षट्कसप्तकयोर्मध्येऽष्टाव-
तिपादनिचृत् ।
१२ द्वौ नवकौ षट्कश्च नागी ।
१३ विपरीता वाराही ।
१४ षट्कसप्तकाष्टकैर्वर्धमाना ।
१५ विपरीता प्रतिष्ठा ।
१६ तृतीयं द्विपाज्जागतगाय-
त्राभ्याम् ।
१७ त्रिपात्त्रैष्टुभैः ।

इति गायत्र्यधिकारः ।

उष्णिगधिकारः —

१८ उष्णिग्गायत्रौ जागतश्च ।
१९ ककुम्मध्ये चेदन्त्यः ।
२० पुर-उष्णिक् पुरः ।
२१ परोष्णिक् परः ।
२२ चतुष्पाद्दषिभिः ।

इत्युष्णिगधिकारः ।

अनुष्टुबधिकारः—

२३ अनुष्टुब्गायत्रैः ।
२४ त्रिपात् क्वचिज्जागता-
भ्याश्च ।
२५ मध्येऽन्ते च ।

इत्यनुष्टुबधिकारः ।

बृहत्यधिकारः —

२६ बृहती जागतस्त्रयश्च
गायत्राः ।
२७ पथ्या पूर्वश्चेत्तृतीयः ।

२८ न्यङ्कुसारिणी द्वितीयः।
२९ स्कन्धोग्रीवी क्रौष्टुकेः।
३० उरोबृहती यास्कस्य।
३१ उपरिष्टाद् बृहत्यन्ते।
३२ पुरस्ताद् बृहती पुरः।
३३ क्वचिन्नवकाश्चत्वारः।
३४ वैराजौ गायत्रौ च।
३५ त्रिभिर्जागतैर्महाबृहती।
३६ सतोबृहती ताण्डिनः।
इति बृहत्यधिकारः।

---

पङ्क्त्यधिकारः—

३७ पङ्क्तिर्जागतौ गायत्रौ च।
३८ पूर्वौ चेदयुजौ सतः पंक्तिः।
३९ विपरीतौ च।
४० प्रस्तारपंक्तिः पुरतः।
४१ आस्तारपंक्तिः परतः।
४२ विष्टारपंक्तिरन्तः।
४३ संस्तारपंक्तिर्बहिः।
४४ अक्षरपंक्तिः पञ्चकाश्चत्वारः।
४५ द्वावप्यल्पशः।
४६ पदपंक्तिः पञ्च।
४७ चतुष्कषट्कौ त्रयश्च।
४८ पथ्या पञ्चभिर्गायत्रैः।
४९ जगती षड्भिः।
इति पंक्त्यधिकारः।

---

त्रिष्टुब्जगत्यधिकारः—
५० एकेन त्रिष्टुब्ज्योतिष्मती।
५१ तथा जगती।
५२ पुरस्ताज्ज्योतिः प्रथमेन।
५३ मध्येज्योतिर्मध्यमेन।
५४ उपरिष्टाज्ज्योतिरन्त्येन।
इति त्रिष्टुब्जगत्यधिकारः।

---

गायत्र्यादीनां विशेषसंज्ञाधिकारः—
५५ एकस्मिन् पञ्चके छन्दः शंकुमती।
५६ षट्के ककुद्मती।
५७ त्रिपादणिष्ठमध्या पिपीलिकमध्या।
५८ विपरीता यवमध्या।
५९ ऊनाधिकेनैकेन निचृद्भुरिजौ।
६० द्वाभ्यां विराट्स्वराजौ।
६१ आदितः सन्दिग्धे।
६२ देवतादितश्च।
इति गायत्र्यादीनां विशेषसंज्ञाधिकारः।

---

६३ अग्निः सविता सोमो बृहस्पतिर्मित्रावरुणाविन्द्रो विश्वेदेवा देवताः ।

६४ स्वराः षड्जर्षभगान्धार-मध्यमपञ्चमधैवतनिषादाः ।

६५ सितसारङ्गपिशङ्गकृष्ण-नीललोहितगौरा वर्णाः ।

६६ आग्निवेश्य-काश्यप-गौतमा-ङ्गिरसभार्गवकौशिकवास-ष्ठानि गोत्राणि ।

इति तृतीयोऽध्यायः ।

## ※ चतुर्थोऽध्यायः ※

१ चतुःशतमुत्कृतिः ।

२ चतुरश्चतुरस्त्यजेदुत्कृतेः ।

३ तान्यभि-सं-व्या-प्रेभ्यः कृतिः ।

४ प्रकृत्या चोपसर्गवर्जितः ।

५ धृत्यष्टिशक्करीजगत्यः ।

६ पृथक् पृथक् पूर्वत एता-न्येवैषाम् ।

७ द्वितीयं द्वितीयमतितः ।

इति वैदिकं प्रकरणम् ।

लौकिकच्छन्दोऽधिकारः–

८ अत्र लौकिकम् ।

९ आत्रैष्टुभाच्च यदार्षम् ।

१० पादश्चतुर्भागः ।

११ यथावृत्तसमाप्तिर्वा ।

१२ लः समुद्रा गणः ।

१३ गौ गन्तमध्यादिर्लश्च ।

आर्याधिकारः—

१४ स्वरा अर्द्धञ्चार्याद्धम् ।

१५ अत्रायुङ् न ज् ।

१६ षष्ठो ज् ।

१७ न्लौ वा ।

१८ न्लौ चेत् पदं द्वितीयादि ।

१९ सप्तमः प्रथमादि ।

२० अन्ते पञ्चमः ।

२१ षष्ठश्च ल् ।

२२ त्रिषु गणेषु पादः पथ्याद्ये च ।

२३ विपुलान्या ।
२४ चपला द्वितीयचतुर्थौ ग्मध्ये जौ ।
२५ पूर्वे मुखपूर्वा ।
२६ जघनपूर्वेतरत्र ।
२७ उभयोर्महाचपला ।
२८ आद्यर्द्धसमा गीतिः ।
२९ अन्त्येनोपगीतिः ।
३० उत्क्रमेणोद्गीतिः ।
३१ अर्धे वसुगण आर्यागीतिः ।

इत्यार्याधिकारः ।

---

वैतालीयाधिकारः—

३२ वैतालीयं द्विःस्वरा अयुक्पादे युग्वसवोऽन्ते र्ल्गः ।
३३ गौपच्छन्दसकम् ।
३४ आपातलिका भ्गौ ग् ।
३५ शेषे परेण युङ् न साकम् ।
३६ षट् चामिश्रा युजि
३७ पञ्चमेन पूर्वः साकं प्राच्यवृत्तिः ।
३८ अयुक्तृतीयेनोदीच्यवृत्तिः ।
३९ आभ्यां युगपत् प्रवृत्तकम् ।
४० अयुक् चारुहासिनी ।
४१ युगपरान्तिका ।

इति वैतालीयाधिकारः ।

---

मात्रासमकाधिकारः—

४२ गन्ता द्विर्वसवो मात्रासमकं ल् नवमः ।
४३ द्वादशश्च वानवासिका ।
४४ विश्लोकः पञ्चमाष्टमौ ।
४५ चित्रा नवमश्च ।
४६ परयुक्तेनोपचित्रा ।
४७ एभिः पादाकुलकम् ।

इति मात्रासमकाधिकारः ।

---

गीत्यार्याभेदाः—

४८ गीत्यार्य्या लः ।
४९ शिखा विपर्य्यस्तार्द्धा ।
५० लः पूर्वश्चेज्ज्योतिः ।
५१ गश्चेत् सौम्या ।
५२ चूलिकैकोनत्रिंशदेकत्रिंशदन्ते ग् ।
५३ सा ग् येन न समा लां ग्ल इति ।

इति चतुर्थोऽध्यायः ।

## ※ पञ्चमोऽध्यायः ※

१ वृत्तम् ।
२ सममर्द्धसमं विषमञ्च ।
३ समं तावत्कृत्वः कृतमर्द्ध-समम् ।
४ विषमञ्च ।
५ राश्यूनम् ।
६ ग्लिति समानी ।
७ लिगति प्रमाणी ।
८ वितानमन्यत् ।
९ पादस्यानुष्टुब्वक्त्रम् ।
१० न प्रथमात् स्नौ ।
११ द्वितीयचतुर्थयो रश्च ।
१२ वान्यत ।
१३ यश्चतुर्थात् ।
१४ पथ्या युजो ज् ।
१५ विपरीतैकीयम् ।
१६ चपला युजो न् ।
१७ विपुला युग्लः सप्तमः ।
१८ सर्वतः सैतवस्य ।
१९ भ्नौ न्तौ च ।

इत्यनुष्टुब्धिकारः ।

---

पदचतुरूर्ध्वाधिकारः—

२० प्रतिपादं चतुर्वृद्ध्या पद-चतुरूर्ध्वम् ।
२१ गावन्त आपीडः ।
२२ गावादौ चेत् प्रत्यापीडः ।
२३ प्रत्यापीडो गावादौ च ।
२४ प्रथमस्य विपर्यासे मञ्जरी-लवल्यमृतधाराः ।

इति पदचतुरूर्ध्वाधिकारः ।

---

२५ उद्गतामेकतः स्जौ स्लौ, न्सौ ज्गौ, भ्नौ ज्लौ ग्, स्जौ स्जौ ग् ।
२६ तृतीयस्य सौरभकं र्नौ भ्गौ ।
२७ ललितं नौ सौ ।
२८ उपस्थितप्रचुपितं पृथगाद्यं म्सौ ज्भौ गौ, स्नौ ज्रौ ग्, नौ स्, नौ न् ज्यौ ।
२९ वर्द्धमानं नौ स्नौ न्सौ ।
३० शुद्धविराडृषभं त्ज्राः ।

इति विषमवृत्ताधिकारः ।

३१ अर्द्धे ।
३२ उपचित्रकं सौ स्लौ ग्, भौ भ्गौ ग् ।
३३ द्रुतमध्या भौ भ्गौ ग्, न्जौ ज्यौ ।
३४ वेगवती सौ स्गौ, भौ भ्गौ ग् ।
३५ भद्रविराट् त्जौ र्गौ, म्सौ ज्गौ ग् ।
३६ केतुमती स्जौ स्गौ, भ्रौ न्गौ ग् ।
३७ आख्यानकी तौ ज्गौ ग्, ज्तौ ज्गौ ग् ।
३८ विपरीताख्यानकी ज्तौ ज्गौ ग्, तौ ज्गौ ग् ।
३९ हरिणप्लुता सौ स्लौ ग्, न्भौ भ्रौ ।
४० अपरवक्त्रं नौ र्लौ ग्, न्जौ ज्रौ ।
४१ पुष्पिताग्रा नौ र्यौ, न्जौ ज्रौ ग् ।
४२ यवमती र्जौ र्जौ, ज्रौ ज्रौ ग् ।
४३ शिखैकोनत्रिंशदेकत्रिंशदन्ते ग् ।
४४ खञ्जा मह्त्ययुजीति ।

अर्धसमवृत्ताधिकारः समाप्तः ।

इति पञ्चमोऽध्यायः ।

---

## ❋ षष्ठोऽध्यायः ❋

१ यतिर्विच्छेदः ।
२ तनुमध्या त्यौ ।
३ कुमारललिता ज्सौ ग् ।
४ माणवकाक्रीडितकं भ्तौ ल्गौ ।
५ चित्रपदा भौ गौ ।
६ विद्युन्माला मौ गौ ।
७ हंसरुतं म्नौ गौ ।
८ भुजगशिशुसृता नौ म् ।
९ हलमुखी र्नौ स् ।
१० शुद्धविराट् म्सौ ज्गौ ।
११ प्रणवो म्नौ य्गौ ।
१२ रुक्मवती भ्मौ स्गौ ।
१३ मयूरसारिणी र्जौ र्गौ ।

१४ मत्ता म्भौ स्गौ ।
१५ उपस्थिता त्जौ ज्गौ ।
१६ इन्द्रवज्रा तौ ज्गौ ग् ।
१७ उपेन्द्रवज्रा ज्तौ ज्गौ ग् ।
१८ आद्यन्तावुपजातयः ।
१९ दोधकं भौ भ्गौ ग् ।
२० शालिनी म्तौ त्गौ ग् समुद्रऋषयः ।
२१ वातोर्मी म्भौ त्गौ ग् च ।
२२ भ्रमरविलसितं म्भौ न्लौ ग् ।
२३ रथोद्धता र्नौ र्लौ ग् ।
२४ स्वागता र्नौ भ्गौ ग् ।
२५ वृन्ता नौ स्गौ ग् ।
२६ श्येनी र्जौ र्लौ ग् ।
२७ विलासिनी ज्रौ ज्गौ ग् ।
२८ जगती ।
२९ वंशस्था ज्तौ ज्रौ ।
३० इन्द्रवंशा तौ ज्रौ ।
३१ द्रुतविलम्बितं न्भौ भ्रौ ।
३२ तोटकं सः ।
३३ पुटो नौ म्यौ वसुसमुद्राः ।
३४ जलोद्धतगतिर्ज्सौ ज्सौ रसर्तवः ।
३५ ततं नौ म्रौ ।
३६ कुसुमविचित्रा न्यौ न्यौ ।
३७ चञ्चलाक्षिका नौ रौ ।
३८ भुजङ्गप्रयातं यः ।
३९ स्रग्विणी रः ।
४० प्रमिताक्षरा स्जौ सौ ।
४१ कान्तोत्पीडा भ्मौ स्मौ ।
४२ वैश्वदेवी मौ याविन्द्रियऋषयः ।
४३ वाहिनी त्यौ म्यावृषिकामशराः ।
४४ नवमालिनी न्जौ भ्याविति ।

इति षष्ठोऽध्यायः ।

---

## * सप्तमोऽध्यायः *

१ प्रहर्षिणी म्नौ ज्रौ ग् त्रिकदशकौ ।
२ रुचिरा ज्भौ स्गौ ग् चतुर्नवकौ ।
३ मत्तमयूरं म्तौ य्सौ ग् समुद्रनवकौ ।

४ गौरी नौ न्सौ ग् ।
५ असम्बाधा म्तौ न्सौ गाविन्द्रियनवकौ ।
६ अपराजिता नौ र्सौ ल्गौ स्वर-ऋषयः ।
७ प्रहरणकलिता नौ भ्नौ ल्गौ च ।
८ वसन्ततिलका त्भौ जौ गौ ।
९ सिंहोन्नता काश्यपस्य ।
१० उद्धर्षिणी सैतवस्य ।
११ चन्द्रावर्ता नौ नौ स् ।
१२ मालर्तुनवकौ चेत् ।
१३ मणिगुणनिकरो वस्वृषयः ।
१४ मालिनी नौ म्यौ य् ।
१५ ऋषभगजविलसितं भ्रौ नौ न्गौ स्वरनवकौ ।
१६ हरिणी न्सौ म्रौ स्लौ गृतुसमुद्र-ऋषयः ।
१७ पृथ्वी ज्सौ ज्सौ य्लौ ग् वसुनवकौ ।
१८ वंशपत्रपतितं भ्रौ न्भौ न्लौ ग् दिगृषयः ।
१९ मन्दाक्रान्ता म्भौ न्तौ त्गौ ग् समुद्रर्तुस्वराः ।
२० शिखरिणी य्मौ न्सौ भ्लौ गृतुरुद्राः ।
२१ कुसुमितलतावेल्लिता म्तौ न्यौ याविन्द्रियर्तुस्वराः ।
२२ शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्य-ऋषयः ।
२३ सुवदना म्रौ भ्नौ य्भौ ल्गावृषिस्वरर्त्तवः ।
२४ ग्लिति वृत्तम् ।
२५ स्रग्धरा म्रौ भ्नौ यौ य् त्रिःसप्तकाः ।
२६ भद्रकं भ्रौ न्रौ न्रौ न्गौ दिगादित्याः ।
२७ अश्वललितं न्जौ भ्जौ भ्जौ भ्लौ ग् रुद्रादित्याः ।
२८ मत्ताक्रीडा मौ त्नौ नौ न्लौ ग् वसुपञ्चदशकौ ।
२९ तन्वी भ्तौ न्सौ भौ न्याविन्द्रियस्वरमासाः ।
३० क्रौञ्चपदा भ्मौ स्भौ नौ नौ ग् भूतेन्द्रियवस्वृषयः ।
३१ भुजङ्गविजृम्भितं मौ त्नौ नौ र्सौ ल्गौ वसुरुद्र-ऋषयः ।
३२ अपवाहको म्नौ नौ नौ न्सौ गौ नवर्तुरसेन्द्रियाणि ।

इति कृतयः समाप्ताः ।

---

३३ दण्डको नौ रः ।
३४ प्रथमश्चण्डवृष्टिप्रपातः ।
३५ अन्यत्ररातमाण्डव्याभ्याम् ।
३६ शेषः प्रचित इति ।

इति सप्तमोऽध्यायः ।

## * अष्टमोऽध्यायः *

१ अत्रानुक्तं गाथा ।
२ कुड्मलदन्ती भ्तौ न्गौ गिन्द्रियरसाः ।
३ वरतनुर्न्जौ ज्रौ षड्रसाः ।
४ जलधरमाला म्भौ स्मौ समुद्रवसवः ।
५ गौरी नौ रौ ।
६ ललना भ्तौ नसाविन्द्रियर्षयः ।
७ कनकप्रभा स्जौ स्जौ ग् ।
८ कुटिलगतिर्नौ तौ ग् स्वरर्तवः ।
९ वरसुन्दरी भ्जौ स्नौ गौ ।
१० कुटिला म्भौ न्यौ गौ वेदरससमुद्राः ।
११ शैलशिखा भ्रौ न्भौ भ्गौ भूतरसेन्द्रियाणि ।
१२ वरयुवती भ्रौ य्नौ न्गौ ।
१३ अतिशायिनी सौ न्भौ ज्गौ ग् दिक्स्वराः ।
१४ अवितथं न्जौ भ्जौ ज्लौ ग् ।
१५ वस्विन्द्रियसमुद्राश्चेत् कोकिलकम् ।
१६ विबुधप्रिया र्सौ जौ भ्रौ वसुदिशः ।
१७ नाराचकं नौ रौ रौ ।
१८ विस्मिता य्मौ न्सौ रौ ग् रसर्तुस्वराः ।
१९ शशिवदना न्जौ भ्जौ ज् ज्रौ रुद्रदिशः ।
२० द्विकौ ग्लौ ।
२१ मिश्रौ च ।
२२ पृथक् ग्ला मिश्राः ।
२३ वसवस्त्रिकाः ।
२४ लर्द्धे ।
२५ सैके ग् ।

२६ प्रतिलोमगुणं द्विलाद्यर्थम् ।
२७ ततो ग्येकं जह्यात् ।
२८ द्विरर्द्धे ।
२९ रूपे शून्यम् ।
३० द्विः शून्ये ।
३१ तावदर्द्धे तद्गुणितम् ।
३२ द्विद्व्यूनं तदन्तानाम् ।
३३ यथावस्थितिः ।
३४ परे पूर्णं परे पूर्णमिति ।

इति पिङ्गलाचार्यप्रणीतश्छन्दःसूत्र-पाठः

## छन्दःशास्त्रस्थसूत्राणां संख्या

| | | | | | |
|---|---|---|---|---|---|
| १ | प्रथमाध्याये | १५ | ५ | पञ्चमाध्याये | ४४ |
| २ | द्वितीयाध्याये | १६ | ६ | षष्ठाध्याये | ४४ |
| ३ | तृतीयाध्याये | ६६ | ७ | सप्तमाध्याये | ३६ |
| ४ | चतुर्थाध्याये | ५३ | ८ | अष्टमाध्याये | ३४ |
| | | | | सर्वयोगः | ३०८ |

## पिङ्गलसूत्रेषु स्मृता आचार्याः

| आ० ना० | अ० सू० | आ० ना० | अ० सू० |
|---|---|---|---|
| एके | ५।१५ | यास्कः | ३।३० |
| काश्यप | ७।९ | रात-माण्डव्यौ | ७।३५ |
| क्रौष्टुकिः | ३।२९ | सैतवः | ५।१८ |
| ताण्डी | ३।३६ | ,, ,, | ७।१ |


छन्दो द्विधा
वैदिकं
लौकिकं च
लौकिकं त्रेधा
गणच्छन्दः
मात्राच्छन्दः
अक्षरच्छन्दः
आर्यादि
वैताल्यादि
श्र्यादि
तत् त्रेधा
समम्
अर्धसमम्
विषमं च
समपादम्
अर्धसमपादम्
विषमपादम्
समं द्वेधा
साधारणम्
दण्डकं च
दण्डकं त्रेधा
वृत्तगन्धि
चूर्णम्
उत्कलिकम्

# लेखकस्य प्राप्य-पुस्तकानि